राज[illegible] ज्योतिर्विद्वद्भूषण पण्डित जयानन्दशर्म्मकमठात्मज
कुलानन्द शर्म जमलोगी संगृहीता
पुनः श्री पण्डित त्रिलोचनदत्तशर्म्मणासंशोधिता ॥

स्वस्तिश्री १०८ केदारनाथस्थराजारावल जगद्गुरु नीलकण्ठलिंग
महोदय शिवाचार्य्य सेवायां समर्पिता
श्री विक्रम सँवत् १९७८ शाके १८४३ प्रथमावृत्तो ५०० प्रतयः

[illegible]

[illegible] स्वायत्तीकृताः
Printed by B. Raj-Narayan at the Kailas Press Hathras

मूलमन्त्रः॥अथ पूजाप्रयोगः॥प्रातः शुक्लाम्बरधरः पूजागारे समागत्य दीपं प्रज्वाल्य संपूज्य गणपत्यादि नवग्रहं सम्पूज्य भैरवादी निष्टदेवतां ध्यात्वा वास्तु पुरुषं नमस्कृत्य स्वगुरुं ब्राह्मणांश्च नमस्कृत्य । श्रीविष्णु प्रतिमा सन्निधौ पूर्वाभिमुखेन स्वासनेचोपविश्य । ओं सिद्धम् ३ इत्युक्त्वा ॥ कर्म पात्रजले ॥ ओं गंगेच यमुने चेति गँगाद्यावाहनँ कृत्वा गन्ध पुष्पाक्षतादी न्निक्षिप्य । अँकुश मुद्रया सूर्य मण्डलात्तीर्थाना वाह्य धेनु मुद्रयाऽमृतीकृत्य । ततः ओं विष्णुर्विष्णुर्हरिर्हरिः३ त्रिराचम्य ओं अपवित्रः पवित्रोवेतिः आत्मानँ सँप्रोक्ष्य । ओं अस्यश्री आसन मँत्रस्येति स्वासनँ शुद्धिंकृत्वा ओं अपसर्पन्तु ते भूतेति भूतानुत्सार्य । ओं लम्बोदर नमस्तुभ्यमिति ३.पापतये पुष्पाँ जलिंदद्यात् ततः स्ववाम भागे घंटा धूपपात्रँ चसँस्थाप्य सँपूजयेत् । ततः सर्वा पूजोपयोगि सामग्रीः सँपाद्य पुष्पाँ जलिंबध्वा श्रीविष्णुँध्यायेत् । ध्यानम्-ओं अभिन वघन नीलः श्रीमुखः स्वादु लोलस्तिलक ललितभाल श्चारुमंदार मालः ॥ विदलित रिपुजालः पुण्य कारुण्य शीलस्त्रिभुवन परिपालः पातु गोपालबालः । वा०-शान्ताकारं भुजगशयनमिति ध्यात्वा०॥ ओ३म्

अस्यश्री नारायणाष्टाक्षरमंत्रस्य नारद ऋषि अनुष्टुप्छन्दः श्रीविष्णु परमात्मा देवता अहंबीजं सोऽहंशक्तिः ओ३म् ह्रीं कीलकँ ममसर्वार्थसिद्ध्यर्थे जपेविनियोगः । शिरसि ओ३म् नारद ऋषयेनमः ॥ मुखे ओ३म् अनुष्टुप्छन्दसेनमःहृदि ओ३म् श्री मन्नारायणदेवतायेनमःगुह्ये ओ३म् अहंबीजाय० । पादयोः ओ३म् सोऽहंशक्तये० । पादाग्रे ओ३म् ह्रींकीलकाय० । ततः ओ३म ह्रॉं अंगुष्ठाभ्याँनमः ओ३म ह्रीं तर्जनीभ्यां० ओ३म ह्रूँ मध्यमाभ्यां । ओ३म ह्रैं अनामिकाभ्यां० । ओ३म ह्रौं कनिष्ठिकाभ्याँ० । ओ३म ह्रः करतलकरपृष्ठाभ्याँ० ओं ह्राँ हृदयायनमः ओं ह्रींशिरसे स्वाहा । ओं ह्रूँशिखायैवषट् ओं ह्रैं कवचायहुम् । ओं ह्रौं नेत्रत्रयाय वौषट् । ओं ह्रः अस्त्राय फट् । इतिविन्यस्य । ततोध्येत् ॥ ओं परंपरस्मात्प्रकृतेरनादिमे सन्निविष्टँ बहुधा गुहायाम् । सर्वालयँ सर्वचराचर स्थँ नमामिविष्णुँ जगदेकनाथम् । ओं श्रीमन्नारायणायनमः ॥ ततः ओं नमो नारायणायेतिदशधाजप्त्वा ॥ शँखार्घ्यं स्थापनँकुर्यात् । भूमौचन्दने न त्रिकोणवृत्तास्त्रमण्डलँविलिख्य पुष्पाक्षतैःसँपूज्यागनमः रँरजसेनमः तँतमसेनमःइतिमण्डलँ सम्पूज्य तत्रैव त्रिपादिकादि आधारँ सँस्थाप्य-तत्र शँखँनिधाय फट् इतिप्रक्षाल्य शँखँपूजयेत् । ओं शँखा-

दौपन्द्रदे नत्यँ कुक्षौ वरुणदेवता । पृष्ठे प्रजापतिश्चैव ऽ.गे अंगा सरस्वती । त्रैलोक्ये यानि तीर्थानि वासुदेवस्य आज्ञया । संवेतिष्ठन्ति विप्रेन्द्रतस्मा च्छँखँ प्रपूजयेत् । इत्यत्तैस्सम्पूज्य ॥ पुन: पुष्पाक्षतैश्च । ओ३म अग्निश्चाषिः पावमानः पाँचजन्यः पुरोहितः तमीमहे महागयम् ॥ ओ३म पाँच जन्याय विद्‌महे । पावमानाय धीमहि । तन: शँख: प्रचोदयात् ॥ ओ३म गँगेचयमुनेचेति जलेन प्रपूर्य, गँधाक्षत पुष्पादिभि: क्षिप्य मत्स्य मुद्रयाऽऽच्छाद्य धेनुमुद्रयाऽमृतीकृत । शँखयोनिमुद्रेप्रदर्शयेत् । तत: प्रार्थना । ओ३म त्वँ पुरा सागरोत्पन्नो विष्णुनाविधृत: करे । निर्मित: सर्वदेवैश्च पाँचजन्य नमोस्तुते ॥ इति सम्प्रार्थ्य तुलसीदलँ पानि: क्षिप्य तिलँश्चाक्षिपेत् । तेनार्घ्योदकेन सर्वा सामग्रीं सँप्रोक्ष्य आत्मानमपि सम्प्रोक्षयेत् ॥ सँकल्पँ कुर्यात् । ओ३म अद्येत्यादि० अमुकगोत्रोऽमुकराशिरमुकशर्माहँ ममात्मन: श्रुतिस्मृतिपुराणेतिहासोक्त सत्फल प्राप्त्यर्थं सकलैश्वर्याभिवृध्य सर्वत्रयशोविजय लाभादि प्राप्त्यर्थं तथा मम सभार्यस्य सपुत्रास्यखिल कुटुम्ब सहितस्य समस्त भय व्याधिजरा पीडाल्प मृत्यु परिहार द्वारा आयुरारोग्यैश्वर्या-

विपाकूर्ध्वेत० । इदमर्घ्योदक स० श्रीम० ॥ अथाचमनीयम् । ॐ कर्पूरवासितँवारि स्वर्धून्यादिभिरा हृतम । आचम्यनँ मयानीतँ गृह्यतां यज्ञसिद्धये ॥ ॐ ततोविराडजा० । इदमाचमनीयँसम श्रीमल्ल० ॥ अथ स्नानीय जलम । ॐ कृष्णागैात्तमिका घेणातापीभ्यः समुदाहृतम् ॥ सर्वौषधीधुनंतोयं स्नानीयं प्रतिगृह्यतामाॐतस्माद्यज्ञ त्सर्वहुत०॥इदंस्नानीयजलंसम० श्रीमल्ल ॥ अथपंचामृत– ॐपयोदधिघृतं क्षौद्रं सर्करामिश्रितं कृतम । पंचामृतं गृहाणेदं स्नानार्थं कमलापते ॥ ॐ पंचनद्यः सरस्वती अपिडं तिस्त्रोतसः सरस्वतीतु पँचधा सोदेशे भव त्सरित । इदं पंचामृतं स० श्रीमल्ल०॥ततः पंचामृतम स्नानन्तर शुद्धोदकं समर्पयामि श्रीमल्ल० ॥ ततः पृथक २ मंत्रैः पंचाभिषेकः कुर्यात दुग्धेन ॥ ॐ पृथिव्या घेनवोयाश्च यज्ञ साधन हेतवे ॥ तासां दुग्गृहीत्वाभो विष्णो स्नानार्थं सिद्धये ॥ ॐ पयः पृथिव्यां पयःऽओष० इदं दुग्धाभिषेकं करोमि श्रीमल्ल० ॥दुग्धानानान्तरं शुद्धोदकं सम० ॥ दाधिस्ना नम॥ॐ धेनुदुग्धसमुद्भूतंदाधि सम्यक पवित्रकम ॥ गृहाणदेव देवेशस्नार्थं चमयाहृतम । ॐ दधिक्राव्णोअकः स्नानानार्थं दधिसम० श्रीम० ॥ पुनरशुद्धोदकं सम० । घृतस्नानम ॥ ॐ देवाना प्रीतिदं यज्ञ

घृतँ परमपावनम् । धेनुजँ परया प्रीत्या स्नानार्थं गृह्यमेप्रभो ॥ ॐ घृतँ घृतः पावान पिवत वसाँ वसा पावानः पिवतां तरिक्ष स्य हविरसि स्वाहा दिशः प्रदिश आदिशो विदिशा उद्दिशो दिग्भ्यः स्वाहा ॥ स्नानार्थमिदँ घृतँसम० श्रीमल्ल० । घृतस्नानानन्तरँ शुद्धोदकँ० . अथमधुस्नानम् ॥ ॐ सरघाभिः समुन्नीतँ मधुपुष्प समुद्भवम् ।गृहाणत्र पुसिद्ध्यर्थं पितृणाँ तु छिद्रँपरम्॥ॐमधुवाताऽऋतायते०॥इदंमधुसम०॥मधुस्नानानन्तरँपुनश्शुद्धोदकँ० ॥ अथशर्करास्नानम्—ओ अपोमयींसितामिक्षु काराडोद्भव समुद्भवाम् । गृहाण श्रद्धयादेव वरदोऽस्तु सदामम ॥ ओ३म अपाँ रसमुद्वयसँ सूर्येतन सँ समाहितम् । अपा रसस्ययोर सस्तम्वोगृह्णाम्युत्तम मुपयामि गृहीतो सीन्द्राय त्वा जुष्टँ गृह्णामेषते योनिरिन्द्रायत्वा जुष्टतमम् । इमँ स्नानार्थ शर्करासम० । श्रीमल्ल० । ततः शुद्धोदकँस०॥ अथगन्धोदकम्–ओ३म चन्दनागरु संमिश्रँ मलया चलजँशुभम् । स्नानार्थं देवदेवेश गृहाण तुरुषोत्तमः । ओ३म् गन्धद्वारांदुराध० । इदँ गन्धोदकँस०॥ श्रीमल्ल० , पुनश्शुद्धोदकँस० ॥ ततोद्वर्त्तनम्—

ओं नाना सुगन्धि संमिश्रां हरिद्रां रजनीं शुभाम् ॥ उद्वर्त्तनार्थे मद्दत्तां गृहाण करुणानिधे । ओं याओषधीपूर्वाजाता० ॥ उद्वर्त्तनार्थं हरिद्रादि चूर्णं सम० । श्रीमल्ल० ॥ ततो महाभिषेकं शंखोदकेन कुर्य्यात् । ओं सर्वतीर्थाहृतं तोयं सर्वगन्ध विमिश्रितम् । स्नानीयं कृपया देव गृहाण सुरसत्तम ॥ ओं विष्णोरराटमसि विष्णो० ॥ पुनश्च ॥ ओं सहस्रशीर्षा पुरुषेति-पुरुषसूक्तेन चाभिषेकः कुर्यात् ॥ ओं अमृताभिषेकोऽस्तु २ इति त्रिवारं वदेत् ॥ अथवस्त्रम्-ओं पीतवर्णं मयं दिव्यं नाना रंग विरंजितम् । मयोपपादितं वस्त्रं गृहाण परमेश्वर ॥ ओं युवासुवासापरि० ॥ इदंवस्त्रम० । श्रीमल्ल० ॥ अथयज्ञोपवीतम्-ओं प्रजापते समुद्भूतं शुद्धं कार्पास निर्मितम् । नवतन्तुसमायुक्तं ह्युप वीतं गृहाण भो ॥ ओं यज्ञोपवीतं परमं प० । इदंयज्ञोपवीतम सम० । श्रीम० ॥ अथ गन्धम्- ओं मलयाचलजं पीतं शुभ्रं चन्दन मुत्तमम् । गृहाण परमं दिव्यं भाल शोभा प्रद प्रभो । ओं अंशुनाते अंशुः पृच्यतां परुषापरुः गन्धस्ते सोममवतु मदायरसोऽच्युतः इदं गन्ध निवेदयामि श्रीमल्ल० ॥ अथातिलाक्षतान्-ओं तिलजानक्ष तान् दिव्या न्कुंकुम क्तान्मनो हरान् । मयानिवेदितान्

भक्त्या गृहाण भवमुक्तिद। ओं अक्षन्नमीमदन्त०।एतान्स्तिलाक्षतान्स श्रील० ॥ अथतुलसीदलम्-ओं तुलसीहेमरूपाँच रत्नरूपाँच मंजरीम्। भवमोक्ष प्रदान्तुभ्यँ मर्पया म्यहमीश्वरीम् ॥ ओं विष्णोः कर्माणि पश्य तयतो व्रतानि पश्यशे इन्द्रस्य युज्यऽसखा ॥ इदँतुलसीदलँ निवेदयामि श्रीमन्नारायणाय० ॥ अथपुष्पाणि–ओं मालती मल्लिका कँज पुष्पाणि ऋतु जानिच ॥ समर्पयामिलोकेश भक्त्या तुभ्य महँ प्रभो ॥ ओं याहच मदग्नि श्रद्धायै० ॥ इमानि पुष्पाणि स०। श्रीमल्ल० ॥ अथ पुष्पमालाम् ओं सेवन्तिकावकुलचँपक पाटला ।ब्जैः पुन्नागजाति करवीर रसाल पुष्पैः। यानिर्मिताच तुलसीदल मालती विल्वार्पयामि पुरुषोत्तम मेप्रसीद। ओं यद्यसोप्सरसा मिन्द्रश्च०॥ इमाँ पुष्पमालाँस० श्रीमल्ल० अलँकरणम्—ओं भूषणा निविचित्राणी स्वर्ण रौप्य कृतानिच ॥ निवेदितानिमद्भक्त्या शोभार्थंगृह्णप्रभो ॥ ऊँ अलँकरणमसि भूयो लँकरणँ भूयाः ॥ भूषणा भावे रजतादिद्रव्यँसम० श्रीमल्लक्ष्मी नारायणायनमः । ततः शँखाऽघर्षामूलेन तिलाक्षत पुष्प पुँजे आवरणपूजां कुर्य्यात् ॥ वा. पँचामृतेन तुलसीदल पुष्पाक्षतैः ॥ आदौ अँगपूजा ।

ॐ मत्स्याय नमः पादौ पूजयामि तर्पयामि नमः। ॐ कूर्माय नमः गुल्फौ पूजि-
यामि तर्पयामि नमः। ॐ वाराहाय नमः। जानुनी पूजयामि तर्पयामि नमः
ॐ नारसिंहाय० उरू पू० ॥ वामनाय० कटीपू० ॥ ॐ रामाय नमः। उद-
रंपू० ॥ ॐ श्रीरामाय० हृदयंपू०। ॐ कृष्णाय० मुखंपू० ॥ ॐ सहस्र
शिरसे नमः शिरः पू०। श्रीमदनन्ताय० सर्वांगंपू० ॥ पाद्यादिभिस्सम्प
ज्य ॥ आवरणपूजां कुर्यात् ॥ दक्षिणपार्श्वे। ॐ रमायै० रमांपू०। वामे
ॐ भूम्यै० भूमींपू०। ततः ॐ वासुदेवाय० वासुदेवंपू०। ॐ संकर्षणाय० संकर्षणंपू०
ॐ प्रद्युम्नाय० प्रद्युम्नंपू० ॥ ॐ अनिरुद्धाय० अनिरुद्धंपू०। ॐ केश
वाय० केशवंपू०। ॐ नारायणाय० नारायणंपू०। ॐ माधवाय० माधवं
पू०। ॐ गोविन्दाय० गोविन्दंपू०। ॐ विष्णवे० विष्णुंपू०। ॐ मधुसूद-
नाय० मधुसूदनंपू०। ॐ त्रिविक्रमाय० त्रिविक्रमंपू०। ॐ वामनाय०
वामनंपूज०। ॐ श्रीधराय० श्रीधरंपू० ॥ ॐ हृषीकेशाय० हृषीकेशंपू०
ॐ पद्मनाभाय० पद्मनाभंपू०। ॐ दामोदराय० दामोदरंपू०। ततः ॐ
भो अनन्तेहागच्छ इह तिष्ठेत्यावाह्य पाद्यादिभिः सम्पूज्य। शङ्खोदकेन॥

ॐ दयाब्धे त्राहि संसार सर्पान्मा शरणागतम् । भक्त्या समर्पये तुभ्यं प्रथमा वरणार्चनं श्रीमल्लक्ष्मीनारायणस्य दक्षिणहस्ते समर्पयामि ॥ ततः पूर्वादिक्रमेण ॥ ॐ मत्स्याय नमः मत्स्यं पू० । ॐ कूर्माय नमः कूर्मं पूजयामि तर्पयामि नमः । ॐ वाराहाय० वाराहं पू० । ॐ नृसिंहाय० नृसिंहं पू० । ॐ वामनाय० वामनं पू० । ॐ रामाय० रामं पू० । ॐ श्रीरामाय० श्री रामं पू० । ॐ कृष्णाय० कृष्णं पू० । ॐ बौद्धाय० बौद्धं पू० । ॐ कल्किने कल्किं पू० । ॐ अनन्ताय० अनन्तं पू । ॐ विश्वरूपिणे० विश्वरूपं पू० ॥ पाद्यादिभिः सम्पूज्य ॥ शंखोदकेन ॥ ॐ दयाब्धे त्राहि संसार सर्पान्मा शरणागतम० । इदमावरणार्चनं श्रीविष्णोर्दक्षिण हस्ते सम० ॥ पुनस्तत्क्रमेण । पूर्वे । ॐ अनन्ताय० अनन्तं पू० ॥ दक्षिणे ओ३म् ब्रह्मणे० ब्रह्माणं पू० । पश्चिमे ओ३म् वायवे० वायुं पू० । उत्तरे० ओ३म् ईशानाय० ईशानं पू० । आग्नेये, ओ३म् वारुण्ये० वारुणीं पू० । नैर्ऋत्ये ओ३म् गायत्र्यै० गायत्रीं पू० । वायव्ये ओ३म् भारत्यै० भारतीं पू० । ईशाने ओ३म् गिरिजायै० गिरिजां पू० ॥ अग्रे ओ३म्

गरुडाय० गरुडँपू० । वामे ॐ सुपर्णाय० सुपर्णँपू० ॥ पुनः पूर्वादि क्रमेण
ओ३म इन्द्राय० इन्द्रँपू० । ओ३म् अग्नये० अग्निंपू० ओ३म् यमाय०
यमँपू० । ओ३म् निर्ऋतये० निर्ऋतिंपू० ओ३म् वरुणाय० वरुणँपू० ।
ओ३म् वायवे० वायुँपू० । ओ३म सोमाय० सोमंपू० ओ३म् ईशानाय०
ईशानँपू० ॥ पाद्यादिभिः सम्पूज्य ॥ शंखोदकेन । ओ३म् दध्यान्नं बलिं
संसार० । इत्यावरणार्चनम् श्रीसत्य० ॥ तत आग्नेयादि पदिक्षु ॥ ॐ
शेषाय० शेषँपू० । ओ३म विष्णवे० विष्णुँपू० । ओ३म् विधये विधिंपू० ।
ओ३म् प्रजापतये० प्रजापतिंपू० । ओ३म गणाधिपतये० गणाधिपँपू० ।
ओ३म सप्तमातृभ्यो० सप्तमातृःपू० ओ३म दुर्गायै० दुर्गांपू० । ओ३म
क्षेत्रपालाय० क्षेत्रपालँपू० । ओ३म ब्रह्मणे० ब्रह्माणँपू० । ओ३म भास्क
राय० भास्करँपू० । सर्वव्यापिने० सर्वव्यापिंपू० । ओ३म ईश्वराय०
ईश्वरँपू० । ओ३म महाकाशाय० महाकाशँपू० । ओ३म सृष्टिकर्त्रे०
सृष्टिकर्त्तारँपू० । ओ३म हरये० हरिंपूज० । ओ३म् शिवाय० शिवँपू० ।
ओ३म स्थितिकारकाय० स्थितिकारकँपू० । ओ३म अन्तकाय० अन्त-
कँपू० । पुनः पाद्यादिभिः सम्पूज्य ॥ शंखोदकेन ॥ ओ३म दध्यान्नबलिं०

इदमावरणा चैँनम० ॥ पुनस्तर्पयेत् । ओ३म वैकुण्ठाय० वैकुण्ठँपू० । ओ३म शौरये० शौरिंपू । ओ३म महाबलाय० महाबलँपू०। ओ३म पुरुषोत्तमाय० पुरुषोत्तमँपू० । ओ३म अजाय० अजँपू० । ओ३म मँगलाय० मँगलँपू० । ओ३म कपिलाय० कपिलँपू० । ओ३म बलभद्राय० बलभद्रँपू० । ओ३म विजयाय० विजयँपू० । ओ३म अपराजिताय० अपराजितँपू । ओ३म क्षीराब्धिशायिने० क्षीराब्धिशायिँपू । ओ३म लोकनाथाय० लोकनाथँपू०। ओ३म फणिमणि भूपिताय०फणिमणिभूपितँपू०। ओ३म सहस्रमुर्घ्ने० सहस्रमूर्धानँपू० । ओ३म सहस्रार्चिषे० सहस्रार्चिषँ० । तत्रैव ॥ ओ३म पाँचजन्याय० शँखँपू० । ओ३म चक्राय० सुदर्शनँपू० ओ३म पुण्डरीकाय० पुँडरीकँपू० । ओ३म गदायै० कौमोदकींपू० । ओ३म शाँर्गाय धनुःपू० ओ३म खड्गाय० नन्दकँपू० । कौस्तुभाय० मणिपूँ० ॥ पाद्यादिभिः सम्पूज्य ॥ शँखोदकेन ॥ कों दयाब्धे त्राहि सँसार सर्पान्माँ शरणागतम् ॥ भक्त्यास समर्पयेत्तुभ्यँ पचमा वरणार्चनम् ॥ इदाँ । आवरणार्चनँ श्री मलक्ष्मी नारायणस्य दक्षिण हस्ते निवेदयामि नमः ॥ कों साँगाय सपरिवाराय सायुधाय

सशक्तिकाय सबलवाहनाय श्री वैकुण्ठ वासिने पुरुषोत्तमायनमः इति॥ अथधूपम् ॥ ओं दशांगगुग्गुलो द्भूतं चन्दना गरुसं युतम् ॥ सर्वेषा मुत्तमं धूपं गृहाण सुरपूजित ॥ ओं धूरसि धूर्व धू र्वतं यस्मान्० धूपमाघ्रा पयामि श्रीमल्ल० ॥ अथदीपम् ॥ ओं आज्यं सद्वर्त्ति मिर्दीप्तं वन्हिना संहृतमया ॥ दीपंगृहाण देवेश त्रैलोक्य तिमिरापहम् । ओं चन्द्रमा मन सो० ॥ दीपंदर्शयामि श्रीमल्ल० ॥ अथनैवेद्यम् ॥ ओं अन्नं चतुर्विधं-स्वादु रसैः षड्भिस्समन्वितम् ॥ भक्ष्यभोज्य समा युक्त प्रतिगृह्य नमो-स्तुते ॥ ओं अन्नपतेन्नस्यनो धे० ॥ ओं प्राणा यस्याहेति पंच ग्रास मुद्रां प्रदर्शयेत् ॥ मध्येपानीयम् ॥ ओं अति तृप्ति करं तोयंसुगन्धितं निवे-च्छया ॥ त्वयितृप्ते जगत्तृप्तं नित्यतृप्तो महात्मनि ॥ तृषादूरीकरणार्थं मिदंजलंसम० ॥ श्रीम० ॥ पुनर्जलम ॥ ओं साधारण जलं शुभ्रं करस्यां-घ्रि विशुद्धये । सततं देवदेवेश गृहाण ममभक्तितः । ओं शन्नोदेवी रभीष्ट० ॥ उत्तरोपादानार्थं करमुख प्रक्षाल नार्थं च जलं, करोद्वर्त्त नार्थं चन्दनंच समर्प० श्रीमल्ल० ॥ अथताम्बूलम् ॥ ओं पूगी फलं सखदिरं नागवल्लीदलैर्युतम् । एलाकवंग संयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ ओं

यत्तुरूपेण हविषा० ॥ मुखशोभा थमिदं ताम्बूलं सम० ॥ श्रीमल्ल० ॥
अथफलानि ॥ ॐ नारिकेलक खर्जूराक्षोटका दीनि यानिभो । गृहाण
कमलाकाँत फलानि ऋतुजानिच ॥ ॐ याफली नीर्याऽ फला० ॥
इमानि फलानि सम० । श्रीमल्ल० अथोपायनम् । ॐ हिरण्य ताम्र
काँस्याद्य न्यताञ्च रजतादिकम्। उपायनँ गृहाणे दँ प्रभोत्व मनुपा हृनम्
ॐ हिरण्य गर्भःसम० ॥ इमाँ दक्षिणाँ सम० श्रीमल्ल० ॥ अथकर्पूरा
र्त्तिक्यम् ।' ॐ कर्पूर वर्त्ति काभिश्च वर्त्तिभिःसलन्तनः नीराजनानि
सततँ सुख वर्च्चोभिवृद्धये ॥ ॐ अग्निर्ज्योति० नीराजनँ दर्शं-
यामि श्रीमल्ल० ॥ अथप्रदक्षिण ॥ ॐ पापानिसर्वाणि पदे पदेया हरत्य
होत त्क्षण मेवन्नृणाम् । प्रदक्षिणाँ-ताँपरया सुभक्त्या करोम्यहँ पाप
विनाशनाय ॥ ॐ सप्तस्या सन्द० ॥ अथपुष्पांजलिम् ॥ ॐ अनेकपुष्प
ऋतुजैः पूरितँ शुभमँजलिम् । ददामि प्रीतये तुभ्यँ प्रतिगृह्न नमोस्तुते ॥
ॐ यज्ञेन यज्ञमयजन्त० पुष्पाँ जलिंसम० श्री मल्लक्ष्मी० ॥ त-
तः शखोद्कँसपर्णयेत् ॥ ॐ कायेन वाचा मन सेन्द्रियै
र्वा बुद्ध्यात्मन वा प्रकृतिः स्वभावात् ॥ करोमि यद्य त्सक

## ॥ अथ शवपूजापद्धतिः प्रारभ्यते ॥

श्रीगणेशाय नमः । अथ यन्त्रोद्धारः ॥ अनुक्त कल्पे यन्त्रं तु लिखेत्पद्मदलाष्टकम् । षट्कोण कर्णिकं तत्र वेद द्वारोपशोभितम् ॥इति॥ अथ मन्त्रोद्धारः । नमस्कारं समुद्धृत्य चान्तेन समन्वितम् । वारुणं मुखवृत्तं च वायुं लालाट संयुतम् । अनुपं चाक्षरं मन्त्रं पंचाकाम फलप्रदम् । प्रणवादिं वदादेवि तदा मंत्रः षडक्षरः इति । अथ मन्त्रः ॥ ओ३म नमः शिवाय, इति मूलमंत्रः । अथ पूजाप्रयोगः । सामग्रीं संपाद्य नित्य कर्म विधाय, रक्त-महतं वासः परिधाय ओ३म विष्णुर्विष्णुर्विष्णुः३ इति शिरसि अग्नं ओ३म सिद्धं३वा० ओ३म नमोभगवते रुद्रायेति प्राणायामत्रयं च कृत्वा, कमपात्र जले, गंगाद्या वाहनं कुर्यात् । गन्धपुष्पाक्षतैं रभ्यर्च्य तेन जलेनाऽऽत्मानं सम्प्रोक्ष्य ॥ ॐ अपवित्रः पवित्रो वा सर्वावस्थां० ।

ॐ पुण्डरीकाक्षःपुनस्तु ३ इतिशिखाँ । नमस्कारः । दक्षिणे० ओ३म
सरस्वत्यैनमः । ॐ शंख निधयेनमः । वामे, ॐ लक्ष्म्यैनमः । ॐ पद्म-
निधयेनमः ॥ अथासनशुद्धिः ॥ ॐ पृथ्वीत्वयेति मंत्रस्य मेरु पृष्ट ऋषि-
सुतलं छन्दः कूर्मो देवता आसनो पवेशनेविनियोगः ॥ ॐ हिरण्यवर्णा
सुभगा हिरण्यकशिपुर्महि । तस्या हिरण्मयापये लत्या अकरँ नमः ।
इत्यक्षतान् क्षिपेत् । पुनः ॐ विश्वशक्त्यै नमः । ॐ महाशक्त्यैनमः ।
ॐ कूर्मासनायनमः । ॐयोगासनायनमः। ॐ अनन्तासनायनमः ॐ वि-
मलासना यनमः । मध्ये, ॐ परम सुखा सनायनमः । ॐ भूर्भुवस्वः आ-
त्म सनायनमः । इति मंत्रेण पुष्पा दिनाऽऽत्मन आसनस्थानम् ॥ पाद्या-
दिभिर्भूमिं, आसनँ च. सम्पूज्य ॥ प्रार्थयेत् ॥ ॐ पृथिव्यायाधृताः लोका
देवित्वँ विष्णुनाधृतात्वँ च धारयमां देवि पवित्रँ कुरुचासनम् ॥ ॐ पृथि
व्यैनमः ॥ ततः शिखाँबध्नीयात् ॥ ॐ उर्ध्वके शिविरूपाक्षि मांस शोणि
तभोजने । तिष्ठदेवि शिखामध्ये चामुण्डे चा पराजिते विष्णोर्नाम सह
स्त्रेस्तु शिखाबन्धँ करोम्यहम् ॥ अथ दिग्बन्धनम् ॥ ॐ अपसर्पं तु ते
भूता ये भूताः भुवि संस्थिताः । ये भूता विघ्नकर्त्तार स्तेनश्यन्तु शिवा-

ज्ञया । इति भूतादीनुत्सार्य ॥ ॐ सर्वभूतानि वारकाय शांगाय समराम्र सुदर्शनायास्त्रराजायहुँ फट् स्वाहा ॥ इतितालत्रयंकृत्वा ॥ ततः स्वदक्षिणभागे पुष्पाक्षतैः । ॐ गुरुभ्योनमः । ॐ परमगुरुभ्योनमः । ॐ परमेष्टि गुरुभ्योनमः । ॐ पूर्वसिद्धेभ्योनमः । ॐ आचार्येभ्योनमः । ततः स्वावामभागे ॥ ॐ गणेशायनमः । ॐ दुर्गायैनमः । ॐ क्षेत्रपालायनमः । ॐ योगिनीभ्योनमः । ॐ देवेशायनमः । पुनर्दिग् बन्धनम् ॥ॐ अपक्रामन्तु भूतानि पिशाचा सर्व तोदिशम् । सर्वेषाम विरोधेन ब्रह्म कर्म समारभे ॥ वामहस्तेन भूमिं त्रिवारं ताडयेत् ॥ अथ भूशुद्धिः ॥ ॐ भूरसीत्यस्य प्रजापति ऋषिः मातृका देवता प्रस्तार पँक्तिश्छन्दः भूशुद्धौ विनियोगः। भूमौ हस्तौ कृत्वा । ॐ भूरसि भूमिरस्य दितिरसि विश्वधाया विश्वस्य भुव नस्यधर्त्री । पृथिवींयच्छ पृथिवीं दृं ह पृथिवीं माहि ं सिः ॥ अथ भैरव नमस्कारः ॥ ॐ भूताना मित्यस्य कौडिन्य ऋषिः नारायणो देवता अनुष्टुप्छन्दः भैरवनमस्कारे विनियोगः ॥ पुष्पांजलिंबद्ध्वा ॥ ॐ योभूता नामधिपतिर्यस्मिंल्लोकाऽअधिश्रिताः यऽईशे महतो महा स्तेन गृह्णामि त्वामहँ मयि गृह्णामित्वामहम् ॥ ॐ तीक्ष्ण दंष्ट्र महा

काय कल्पांत दहनो पम ॥ भैरवाय नमस्तुभ्य मनु ज्ञाँदातु मर्हसि ॥
इति भू । शुद्धि । ॐ नमः शिवायेति प्राणायाम त्रयं कृत्वा ऽऽ चम्य॥
ॐ सुशान्तिम तु ॥ ॐ स्वस्तिन ऽ इन्द्रो वृद्ध: श्रवा: स्वस्तिनः पूषा
विश्व वेदा । स्वस्तिनऽस्तार्क्ष्यो ऽ अरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु
ॐ भद्र कर्णेभिः श्रणु यामदेवा भद्रं पश्ये माक्ष भिर्यजत्राः । स्थिरै
रंगैस्तुष्टु वा ऽ सस्तनूभिर्व्य से महि देवहितँ यदायुः ॥ तँ पत्नीभि
रनु गच्छम देवाः पुत्रैर्भ्रातृ भिरुतवा हिरण्यैः ॥ नाकँ गृभ्णा नाः सुकृत
स्य लोके तृतीये पृष्ठे अधिरोचने दिव ऽ ॐशान्तिः ३ ॥ अथ नमस्कारा
श्री विघ्न नाशिने मंगल मूर्त्तये नमः । श्री स्वेष्टदेवताभ्योनमः ॥ श्री
ग्रामदेवताभ्योनमः । श्रीस्थानदेवताभ्योनमः । श्रीवास्तुदेवताभ्योनमः।
श्रीवाणीहिरण्यगर्भाभ्याँनमः । श्रीलक्ष्मीनारायणाभ्याँनमः । श्रीउमामहे
श्वराभ्यांनमः । श्रीशचीपुरँदराभ्यांनमः । श्रीमातृ पितृ चरण कमला
भ्यांनमः । ॐ सर्वेभ्योदेवेभ्यो नमः ॐ सर्वेभ्योब्राह्मणेभ्योनमः ॥ निर्विघ्न
मस्तु ॥ ॐ अभीप्सितार्थ सिद्ध्यर्थं पूजितोयः सुरासुरैः । सर्व विघ्न
हरस्तस्मै श्रीगणाधि पतयेनमः । ॐ सर्व मँगल मँगल्ये शिवे सर्वार्थे

सुचिरँ सूचाविष्य माणँ यतनवीरिष्टँ तच्छिनाशद्वारा । एकादश स्थान सुस्थित वच्छुभ फल प्राप्तये, पुत्र पौत्रादि सन्तते रविच्छिन्न वृद्ध्यर्थं आदित्यादि नवग्रहानुकूलता सिध्द्यर्थं तथा, इन्द्रादि दशदिक्पाल प्रसन्नता सिध्द्यर्थं, आधिदैविकाधिभौतिकाध्यात्मिक त्रिविधतापोपशमनार्थ धर्मार्थ काम मोक्षफल प्राप्त्यर्थं ओं भूर्भुवः स्वः श्री साम्बसदा शिव प्रीत्यर्थे षडंग न्यास पूर्वकं यथा ज्ञानेन यथा लब्धे नोपचारेण श्री साम्ब सदा शिव पूजन कर्माहं करिष्ये ॥ ततः ओं अस्यश्री शिव षडाक्षर मंत्रस्य वामदेव ऋषिः पंक्ति श्छंदो श्रीसाम्बसदा शिवोदेवता. ओं बीजं नं शक्तिः शिवायेति कीलकं चतुर्वर्ग फलावाप्तये जपेविनियोगः । ओं शिर सिवाम देव ऋषयेनमः । मुखे, ओं पँक्तिश्छन्द से नमः । हृदि ओं साम्बसदा शिवायनमः । गुह्ये, ओं बीजायनमः पादयोः ओं शक्तयेनमः । सर्वाङ्गे, ओं शिवायेति कीलकायनमः ॥ ततः ओं हृदयाय नमः । नँ शिरसे स्वाहा । मँ शिखायैवषट् । शिं कवचायहुम् । वाँ नेत्र त्रयायवौषट् । यँ अस्त्रायफट् । ततोध्यायेत्–ओं पँ चवक्त्रं दशभुजो सर्वं

देवो वामोप्रभुः । वेदोप गीनः सर्वज्ञः सोम सूर्याग्नि लोचनः ॥ गौरी भूषित वामाँगो कल्याण गुण सागरः । सर्व लोकपतिः श्रीमान् सर्वदेवार्चितो विभुः निष्कलो निर्गुणो नित्यो निर्मलो निरुपाद्रिकः निरँजनो निराकारो निरवँभो निरामयः ॥ ज्योतिः स्वरूपो विमलो चिद् घनः सकलात्मकः । एकः पूर्ण शिवः शान्तो मायातीतोऽक्षरो वरः । इति ध्यात्वा ॐ नमः शिवायेति दशधाजप्त्वा ॥ अर्घ्य स्थापनँकुर्यात् ॥ भूभारक्त चन्दनेन त्रिकोण वृत्त चतुरस्र मण्डलँ विलिख्य । ॐ ऐं व्यापक मण्डलाय नमः । इति सम्पूज्य । ॐ मँ वाह्निमण्डलाय दश कलात्मने नमः शिव र्घ्य पात्रा धाराय नम इति, आधारँ सम्पूज्य ॐ फट् इति अर्घ्य पात्र क्षालनम् ॥ ततोऽर्घ्यपात्रमाधारोपरि सँस्थाप्य ॐ अँ अर्कँ मण्डलाय द्वादश कलात्मने शिवार्घ्य पात्राय नमः । इत्या धारोपरि पात्रँ सम्पूज्य । ततः ॐ नमःशिवायेति मूलमँत्रेणार्घ्य पात्रँ वारिणा परिपूर्य. पा. ॐ गँगेच यमुने चेति । ततः ॐ सँसोम मण्डलाय षोडश कलात्मने श्रीशिवार्घ्यामृता यनमः । इति सम्पूज्य । नम इति । गन्धम्.धूपः इति पुष्पम्.अक्षताँश्चक्षिपेत् ॥ अँकुश मुद्रया सूर्य मण्डला

त्तीर्थं नावाह्य,मत्स्य मुद्रयाऽऽच्छाद्य धेनु मुद्रया मृतीकृत्य योनिमुद्रयोपर
मी कृत्य सुगन्धादि द्रव्यं चानिःक्षिपेत्।तेन।दर्योदकेन सर्वा सामग्रीं सम्प्रा
क्ष्य, आपोहिष्ठे तिमंत्रेण, आत्मानं चाभिसिंचयेत् ॥ ततः घंटांपूजयेत् ॥
ॐ आगमार्थं तु देवानां गमनार्थंतु रक्षसाम् । घंटा नादं प्रकुर्वीत पश्चात्
घंटां प्रपूजयेत् ॥ ॐ सुपर्णो सि० ॥ ॐ भूर्भुवः स्वः घंटास्थ गरुडायनमः
आवाहयामि । सर्वो पचारार्थे पाद्य गन्धाक्षत पुष्पाणि समर्पयामि,
नमस्करोमि. घन्टा मुद्रांच प्रदर्श्य ॥ ततो वामे धूपपात्रं ॥ दक्षिणे दीप
पात्रं संस्थाप्य, पाद्यादीनि समर्प्पयामि, गंध वंदे वाय धूप पात्रा
यनमः । वन्हि दैवत्याय दीप पात्राय नमः ।
सम्पूज्य । आदौ गृह वास्तु पुरुष पूजयेत् ॥ गृहभित्तौ, वा,
भूमौ, अक्षतैः । ॐ वास्तोपते प्रतिजानीह्यस्मान् स्वावेशो अनमीवो
भवानः । यत्त्वेमहे प्रति तन्नो जुषस्व शन्नो भवद्विपदे शं चतुष्पदे॥
ॐ भूर्भुवः गृह वास्तु पुरुषायनमः । पाद्यादिभिः सम्पूज्य। नमस्कारः।
ॐ पूजितोऽसि मया वास्तो होमाद्यैरर्चनैः शुभैः । प्रसीद पाहि देवेश
देहिमे गृह जं सुखम् ॥ ॐ वास्तु पुरुषायनमः ॥ ततः पीठ पूजां कुर्यो

तुष्पाक्षतैः ॥ ओं मण्डूकायनमः । ओं कालाग्नि रुद्रायनमः । ओं आधार शक्त्यैनमः ओं आनन्द कन्दायनमः ओं प्रांच पद्म मागलेनः । ओं कू [illegible] यनमः । ओं [illegible] ः । ओं वाराहा यनमः । ओं पृथिव्यैनमः । ओं सुधा [illegible] यनमः । ओं श्वेतद्वीपायनमः । ओं मणिमण्डपायनमः । ओं कल्प वृक्षायनमः ओं स्वर्ण सिंहासनाय नमः । ओं सित छत्रायनमः । ओं श्वेत चामराय नमः । नमः । ॐ धर्मायनमः । ॐ ज्ञानायनमः । ॐ वैराग्यायनमः ॐ अनैश्वर्यायनमः । ॐ अनन्तायनमः । ॐ मचिन्तालायनमः । ॐ प्रकृतिमयपत्रेभ्योनमः । ॐ विकारमयके शरेभ्यो० । ॐ पंचाशद्वर्ण बीजाढ्य कर्णिकायैनमः । ॐ सं सत्वायनमः ॥ ॐ रं रजसेनमः । ॐ तं तमसेनमः ॥ ॐ मायायैनमः । ॐ विद्यायैनमः । ॐ सूर्येन्दु वह्नि मण्डलेभ्योनमः ॐ आत्मनेनमः । ॐ अन्तरात्मने नमः । ॐ परमात्मनेनमः । ॐ ज्ञानात्मनेनमः । ॐ माया तत्वाय० । ॐ विद्यातत्वाय० । ॐ कलातत्वाय० । ॐ परतत्वायनमः ॥ ततः पूर्वादि क्रमेण ॐवामदेवायनमः । ॐज्येष्ठाय० ॐ श्रेष्ठाय० । ॐ रुद्राय० ॐ कालाय० । ॐ कलविकरणाय० । ॐ बलाय

ॐ बलविकरणाय० । ॐ बलप्रमथिने० । ॐ सर्वभूतदमनाय० । ॐ म-
नोन्मनाय० । मध्ये, ॐ नमो भगवते सकल गुणात्मने अनंतयोगपीठा-
त्मने नमः ॥ अथावाहनम् ॥ ॐ आगच्छ देवदेवेश लिंगेऽस्मिन् सुस्थिरो-
भव । स्थिरोभूत्वा महादेव पूजां गृह्णण नमो ऽस्तुते ॥ श्रीसांबसदाशि-
वायनमः ॥ ततः नूतनमूर्तीनां प्राणप्रतिष्ठां कुर्यात् ॥ तद्यथा ।
ॐ अस्य श्री प्राण प्रतिष्ठा मंत्रस्य ब्रह्मविष्णु महेश्वरा ऋषयः
ऋग्यजुःसामाथर्वाणि छंदांसि क्रियामय वपुः प्राणाख्या देवता
आंबीजं ह्रींशक्तिः क्रौं कीलकं आसां नूतनमूर्तीनां प्राणप्रतिष्ठापने
विनियोगः ॥ अनामिकांगुष्टयोगेन । पंचगव्येन पँचामृतेनवा । ॐ आँ
ह्रीं क्रौं यँ रँ लँ वँ शँ षँ सँ सोऽहँ हँसः एषाँ शिवस्य नूतनलिंगानाँ
प्राणा इहप्राणाः ॥ पुन अनेनैव मँत्रेण एषाँ शिवस्य नूतनलिंगानाँ जीव
इह स्थितः ॥ पुन एवँ । शिवस्य सर्वेंद्रियाणि इह स्थितानि । तथैव पुन
रनेनैव मँत्रेण । एषाँ शिवस्य नूतन लिंगानाँ सर्वेन्द्रियाणि । वाङ् मन
स्त्वक् चक्षु श्रोत्र जिह्वा घ्राण पाणि पाद पायू पस्थानि इहैवागत्य सुखँ
चिरँ तिष्टँतु स्वाहा ॥ पुनर्वेदोक्त मंत्रेण ॥ ॐ एततेदेव सवितर्यज्ञँ प्राहु
बृहस्पतये ब्रह्मणे । तेन यज्ञ मव तेन यज्ञ पति तेन मामव ॥ ॐ मनोजू-

ति० ॥ पश्चात्संस्कारसिद्धये पंचदश प्राणवावृत्तीः कारयेत् ॥
यथा । ॐ ॐ ॐ इति पंचदश वारँ १५ पठेत् ॥ अनेन आसाँ
नूतन मूर्तीनाँ जातकर्मगर्भाधानादि पँन्दशसँस्कारान्सँपादयामि ।
इतिवदेत् ॥ अथ प्रार्थना । ॐ स्वागतँ देवदेवेश मद्भाग्यात्त्वमिहागतः।
सान्निध्यँतु सदादेव स्वार्चायाँ परिकल्पय ॥ अनेन प्राण प्रतिष्ठादि कर्म
कृतेन श्रीसाम्बसदा शिवो देवता प्रीयताँ नमम ॥ ततः प्रतिवक्रे प्रत्येक
पँचामृतेनाभिषेकँ कुर्यात् ॥ तद्यथा ॥ दुग्धेन ॐआप्यायस्वेति गौत्तम
ऋषिः पयो देवता ऊर्ध्ववक्रे ईशानाय क्षीरस्नाने विनियोगः ॥ ॐ कामधे
नु समुद्भूतँ सर्वेषाँ जीवनँ परम् । पावनँ यज्ञ हेतुश्चपयः स्नानार्थमर्पि-
तम् ॥ ॐ पयः पृथिव्याँ० ॥ स्नानार्थमिदँ दुग्धँ समर्पयामि श्री साँबसदा
शिवायनमः । एषः गन्धः ॥ एतानक्षतान् । इमानि पुष्पाणि समर्प० ।
धूपमाघ्रापयामि । दीपं दर्शयामि । नैवेद्यँ निवेदयामि श्रीसाँब० ॥ ततो
ऽक्षतैःॐईशानःसर्वविद्यानामीश्वरःसर्वभूतानाँब्रह्माधिपतिर्ब्रह्मणोऽधिपति
शिवोमे अस्तु सदाशिवोम् ॥ ततश्शुद्धोदकम् । ॐ आपो अस्मानिति
ब्रह्मागौत्तम ऋषिस्त्रिष्टुप्छन्दःविश्वे देवादेवता आपः स्नाने विनियोजः ।
ॐ आपो अस्मान्मातरः शुंधयन्तु घृतेन नो घृतप्वः पुनन्तु विश्व ँ हिरि

प्रँ प्रवँहन्तिदेवी रुद्रादिभ्यः शुचिरा पूतऐमि । दीक्षातँपस्तस्तिन्‌राल त्वाँ ताँ शिवा ँ शग्माँ परिदधेभद्रं वर्णपुष्यन् ' स्नानार्थं शुद्धोदकँ समर्पया मि । श्रीसाम्बसदा० ॥ एवँप्रतिचक्रं पूजने कर्त्तव्यम् ॥ ततः दधिस्नानँ ॐ दधिक्राव्णोमि वामदेव ऋषि रनुष्टुप्छन्दः दधि देवता पूर्व चक्रे वाम देवाय दधिस्नाने विनियोगः । ॐ दधिक्राव्णो अकारिषँ जिष्णोरश्वस्य वाजिनः सुरभिनोमुखा करत्प्रणऽआयु ँ षितारिषत् ॥ ॐ पयसस्तु समुद्भूतँ० ॥ स्नानार्थंदधिसम० श्रीसाम्बस० एष गन्धः । एतानक्षतान इमानि पुष्पाणिस० धूप माघ्रापयामि । दीप दर्शयामि, नैवेद्यँ निवेदया- मि, श्रीउमामहेश्वराभ्याँनमः । ततः शुद्धोदकँ पूर्ववत्, वा, ॐ असोय सूताभ्रो० । दधिस्नानानन्तरँ शुद्धोदकँ समर्पयामि ॥ ततो ऽक्षतैः । ॐ वामदेवायनमोज्येष्ठाय नमःश्रेष्ठायनमोरुद्रायनमः कालायनमःकलविकर णाय नमोबलविकरणायनमो॥ततोघृतम्‌ॐघृतँमिमीक्षेतिगृत्समद ऋषि स्त्रिष्टुप्छन्दः दक्षिण चक्रेअघोरायघृतस्नानेविनियोगः॥ ॐघृतम्मिमीक्षे घृतमस्ययोनि र्घृतेश्रितो घृतंवस्यधाम । अनुष्वधमावहमादयस्व स्वाहा घृतं वृषभ वक्षिहव्यम् । ॐ नवनीत समुत्पन्नँ० स्नानार्थंघृतं

स्नम० श्री सांब०। एष गँधः । एतानक्षतान्। इमानि पुष्पाणि। धूप-
माघ्राप यामि । दीपंदर्शयामि । नैवेद्यं निवेदयामि। श्रीसाम्ब० ॥
अक्षतैः ॐो अघोरेभ्योऽथघोरे भ्यो घोर घोर। तरेभ्यः सर्वेभ्यः सर्व सर्वे
भ्यो नमस्तेऽअस्तुरुद्ररूपेभ्यः ॥ शुद्धोदकम् । ॐो असोपस्ताम्रोऽअ० ।
घृत स्नानानन्तरँ शुद्धोदक स्नम० । श्रीसाम्ब० ॥ अथ मधुस्नानम् ।
ॐो मधुवातेति गात्तम ऋषि गांयत्रीछन्दो मधुदेवता पञ्चिमवक्रे तत्पु-
रुषाय मधुस्नाने विनियोगः। ॐो मधुवाताऽऋतायते मधुक्षरान्तिसिंधवः
माध्वीर्घः सन्त्वोषधीः मधुनक्त मुतोपसो मधुमत्पार्थिव ९ रजः मधु-
धौरस्तु नः पिता मधुमान्नो वनस्पतिर्मधुमाँ अस्तुसूर्य माध्वीर्गावो भव-
न्तुनः। ॐो तरुपुष्प समुद्भूतं० । स्नानार्थमधुस्न० । श्रीसाँव० ॥ एष
गँधः। एतानक्षतान्। इमानि पुषपाणि। धूपमा०। दीपँदर्श०। नैवेद्यंनि-
वेद०। श्रीसाम्बशिवाय० ॥ अक्षतैः ॥ ओ३म तत्पुरुषायविद्म महे महा-
देवाय धीमहि। तन्नोरुद्रः प्रचोदयात्। शुद्धोदकँ । ओ३म असोप० ।
मधुस्नाननन्तरँ शुद्धोदकँस्नम० । श्री साम्ब० ॥ अथ शर्करास्नानम् ।
ओ३म अपा ९ रस मित्यस्य इन्द्रबृहस्पती ऋषी अनुष्टुप्छँदः उत्तार

वक्षे सद्यो जाताय शर्करास्नाने विनियोगः । ओ३म अपा ँ रस उद्वय
स ँ सूर्ये सँत ँ समाहितम् । अपा ँ रसस्य योरस स्तँवोगृह्णाम्युत्त-
मनुपयाम गृहीतो सीन्द्रायत्वा जुष्टं गृह्णाम्येषते योनिरिन्द्रायत्वा जुष्ट
तमँ ॥ ओ३म इक्षुसारसमु० । स्नानार्थं शर्कराँसम० श्रीसाम्ब० । एष
गँधः । एतानक्षतान् । इमानि पुष्पाणि । धूपमा० । दीपँदर्श० । नैवेद्यं-
नि० । श्रीसाम्बसदाशिवाय० । अक्षतैः ॥ ओ३म सद्योजातँ प्रपद्यामि
सद्यो जाताय वैनमः । भवे भवे नाति भवे भवस्व माँ भवोद्भवाय-
नमः ॥ पुनः शुद्धोदकँ । ओ३म असौयस्ता म्रोऽअ० । शर्करास्नानान-
न्तरँ शुद्धोदकँसम० श्रीसाम्बसदाशिवाय० ॥ ततः पुनरावाहनादि
षोडशोपचारै श्च पूजयेद्यथा ॥ अथ पुष्पाँजलिगृहीत्वाऽऽवाहनँ कु-
र्यात् ओ३म आगच्छ भगवन् देव स्थाने चात्र स्थिरोभव । याव सन्नि-
धोभव । ओ३म नमः शँभवाय० । इत्यावाह्य । ओ३म भूर्भुवः स्वः
साँग सपरिवार सायुध सशक्तिक श्रीसाम्बशिव इहागच्छेह तिष्ठ
इहस्तु प्रतिष्ठितो वरदोभव ॥ अथासनम् । ओ३म रम्यँसु शोभनँ दिव्यँ
सर्वं सौख्य करँ शुभँ । आसनँच मयादत्तँ गृहाण परमेश्वर । ओ३म

यातेरुद्रशिवा० इत्यासनार्थं पुष्पाणि सम० श्रीसाम्ब० ॥ अथपाद्यम् ।
ओ३म उष्णोदकं निर्मलंच सर्वसौगन्ध संयुतं । पादप्रक्षालनार्थाय द-
त्तं ते प्रति गृह्यताम ॥ ओ३म यामि षुंगिरि शं० । इदं पाद्यं सम० श्री-
साम्ब० । अथार्घ्यम । ओ३म अर्घ्यं गृहाण देवेशगन्ध पुष्पाक्षतैःसह ।
करुणा करमेदेव गृहाणार्घ्यं नमोऽस्तुते ॥ ओ शिवनवच सात्वा०अर्घ्यो-
दकं सम० श्रीसाम्ब० ॥ अथाचमनीयम् । ओ सर्व तीर्थ समायुक्तं सुर-
भि निर्मलं जलम । आचम्यतां मयादत्तं गृहाण परमेश्वर ॥ ओ अद्य
बोचदृषि० । इदमाचमनीयंसम० श्रीसाम्ब० ॥ अथस्नानम् । ओ३म
गंगा सरस्वतीरेवा पयोष्णी नर्मदा जलैः । स्नापितोसि मयादेव तथा
शान्ति कुरुष्वमे । ओ३म असोयस्ताम्रो०। इदं जलं समर्प०श्रीसाम्ब०॥
अथगन्धोदकम । ओ मलया चलसं भूतं चन्दनागरु सम्भवम ।
चन्दनं देव देवेश स्नानार्थं प्रतिगृह्यताम ॥ ओ३म गन्धद्वारां दुराध० ।
गन्धोदकं समर्प० श्री साम्बसदा० । पुनः शुद्धोदकं च समर्प० ॥ श्रीसा-
म्ब० ॥ अथ हरिद्रादिचूर्णम । ओं नाना सुगन्धि द्रव्यं च चन्दनं रजनी
युतम । उद्वर्तनं मयादत्तं स्नानार्थं प्रतिगृह्यताम् ॥ उद्वर्तनार्थमिदं हरि

ओ३म् अंश्शुनाति अंश्शुः पृच्यतांपरुपापरुः। गन्धस्ते सोमवतु मदा
यर सोऽअच्युतः। पुनः शुद्धोदकंसम० श्रीसाम्ब०। अथ पंचामृतम्।
ओ३म् पयोदधिघृतं चैव मधुच शर्करायुतम्। पंचामृतं मयानीतंस्ना-
नार्थं प्रति गृह्यताम॥ ओ३म पंचनद्यःसरस्वती०। स्नानार्थं पंचामृतं
सम० श्रीसाम्ब०। पुनराचमनीयम्। ओ३म पुनराचनीयं चदीयते तव
तुष्टयेगृह्णाण देवदेवेश प्रशान्तो भवदेवप्रभो। ओ३म असौयोवसर्पति०।
पुनरामचनीयं सम० श्रीसाम्ब०। ततः पुरुष सूक्तेन,ओ३म सहस्त्रशी-
र्षेति महाभिषेकः कुर्यात्॥ ओ३म अमृताभिषेकोस्तु२इतित्रिवारं
वदेत्॥ अथयज्ञोपवीतम्। ओ३म नवभिस्तन्तुभिर्युक्तँ त्रिगुणदेवता-
मयम्। उपवीतं चोत्तरीयं गृहाण परमेश्वर। ओ३म नमोस्तुनील०।
यज्ञोपवीतँ सम० श्रीसाम्ब०॥ अथवस्त्रम्। ओ३म सर्वभूताधिके
सौम्ये लोकलज्जा निवारणे। मयोपपादिते तुभ्यँ वाससीप्रति गृह्यताम।
ओ३म प्रमुँचधन्वन०। वस्त्रंसमर्प० श्रीसाम्ब॥ अथगंधम्। ओ३म
श्रीखण्डँ चँदनँ दिव्यँ गन्धाढ्यँ सुमनो हरम्। विलेपनँ सुरश्रेष्ट चँदनँ
प्रतिगृह्यताम। ओ३म विज्यँधनु—रु०॥ इदँगन्धसम० श्रीसाम्बसदा०॥

अथाक्षतान् ॥ ओ३म अक्षताश्च सुरश्रेष्ठ कुँकुमाक्ताःसुशोभिताः ।
मयानिवेदिता भक्त्या गृहाण परमेश्वर । ओ३म परित्वागिर्वणोगिर इमा भवन्तु विश्वतः । वृद्धायुमनुवृद्धयोजुष्टा भवन्तुजुष्टयः । वृद्धायुमनुवृद्धयो जुष्टा भवन्तु जुष्टयः ॥ पूरिति० ।
अक्षतान्निवे दयामि श्रीसाम्ब० ॥अथपुष्पाणि॥ ओ३म माल्यादीनिसुगँ-
धिनि मालत्यादीनिवैप्रभो।मयानीतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम ।
ओ३म षालेहेतिस्त्रीतुष्ट० ॥ पुष्पाणिसम० श्रीसाम्ब० ॥ अथबिल्वप-
त्रम् । ओ३म त्रिदलँ त्रिगुणाकारँ त्रिनेत्रँच त्रियायुधम् । त्रिजन्म पाप
सँहार मेकबिल्वँ शिवार्पणम् । ओ३म शिवोभव प्रजाभ्यो मानुषीभ्यस्त्व
मँगिरः । माद्यावा पृथिवीऽअभितोषज्जिमान्तरिक्षँ मावनस्पतीन् ॥ बिल्व
दलानिसम० श्रीसाम्ब० ॥ अथपुष्पमाला ॥ ओ३म नानासुगँधिभिर्युक्तँ
कलुजैः कुसुमैः शुभैः । मया या ग्रथिता माला गृहाणत्वँ सुरेश्वर ।
ओ३म यत्रशोभ्सरसा० ॥ इमाँ पुष्पमालाँसम० श्रीसाम्ब० ॥ अथ
सौभाग्यद्रव्यम् ॥ ओ३म हरिद्राँकुँकुमँ चैवसिंदूरँ कज्जलान्वितम् ।
सौभाग्य द्रव्य सँयुक्तँ गृहाणाम्बिकया सह । ओ३म अहिरिवभोगै
पर्य्येति०। सौभाग्यद्रव्यँसम० श्रीसाम्ब० ॥ अथ दूर्वाङ्कुराणि ॥ ओ३म
हरिताःश्वेत वर्णा वा पँचत्रिपत्र सँयुताः । दूर्वाङ्कुराः मयादत्ताः गृहाण

अवनाथक । ओ३म् काण्डात्काण्डात्प्र० ॥ अथधूपम् ॥ ओ३म् वनस्प-
तिरसोद्भूतो गंधाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वदेवानाँधूपोयं प्रति-
गृह्यताम् । ओ३म् अवतत्य धनु०॥ धूपमघ्रापयामिश्रीसाम्ब० ॥ अथ-
दीपम् ॥ ओ३म् आज्यँ सद्वर्ति संयुक्तँ वह्निनायो जितँमया । दीपँ
गृहाण देवेश त्रैलोक्यतिमिरापह । ओ३म् नमस्तऽआयुधाया०॥ दीपँ-
दर्शयामिश्रीसाम्ब० ॥ अथ नैवेद्यम् ॥ ओ३म् शर्कराघृत संयुक्तँ मधुरँ
स्वादुचोत्तमम् । उपहार-समायुक्तँ नैवेद्यँ प्रतिगृह्यताम् । ओ३म् नासो
महान्त सुत्त० । ओ३म् प्राणायस्वाहा० ओ३म् अपानायस्वाहा, ॐ व्या-
नायस्वाहा,ॐ उदानायस्वाहा, ओ३म् समानायस्वाहा,। एभिर्पचभिर्मंत्रैः
ग्रासमुद्रां प्रदर्श्य । इदँ नैवेद्यँ निवेदयामि श्रीसाम्ब०॥ मध्येपानीयम् ॥
ओ३म् एलोसीर लवँगादि कर्पूर परिवासितम् । प्रक्षालनार्थं कृतँ तोयँ
गृहाण परमेश्वर ॥ ओ३म् वरुणस्योत्त० ॥ पुनर्जलम् ॥ ओ३म् साधा-
रण जलँ शुद्धँकरस्याँघ्रि विशुद्धये। सतँदेवदेवेश गृहाण मम भक्तितः।
ओ३म् शन्नोदेवीरभी० । उत्तरापोसनार्थंकर मुख प्रक्षालनार्थं पुन-
र्जलँसम० श्रीसाम्ब० । अथताम्बूलम् । ओ३म् पूंगीफलँ महादिव्यँ

अथाक्षतान् ॥ ओ३म अक्षताश्च सुरश्रेष्ठ कुँकुमाक्ताःसुशोभिताः ।
मयानिवेदिता भक्त्या गृहाण परमेश्वर । ओ३म परितेधन्वनोहेति० ।
अक्षतान्निवेदयामि श्रीसाम्ब०॥अथपुष्पाणि॥ ओ३म माल्यादीनिसुगं-
धीनि मालत्यादीनिवैप्रभो।मयानीतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् ।
ओ३म यातेहेतिर्मीढुष्ट० ॥ पुष्पाणिसम० श्रीसाम्ब० ॥ अथबिल्वप-
त्रम् । ओ३म त्रिदलँ त्रिगुणाकारँ त्रिनेत्रँच त्रियायुधम् । त्रिजन्म पाप
सँहार मेकबिल्वँ शिवार्पणम् । ओ३म शिवोभव प्रजाभ्यो मानुषीभ्यस्त्व
मङ्गिरः । माद्यावा पृथिवीऽअभिशोचीर्मान्तरिक्षँ मावनस्पतीन् ॥ बिल्व
दलानिसम० श्रीसाम्ब० ॥ अथपुष्पमाला ॥ ओ३म नानासुगंधिभिर्युक्तँ
मधुजैः कुसुमैः शुभैः । मया या ग्रथिता माला गृहाणत्वँ सुरेश्वर ।
ओ३म यक्षरोप्सरसा० ॥ इमाँ पुष्पमालाँसम० श्रीसाम्ब० ॥ अथ
सौभाग्यद्रव्यम् ॥ ओ३म हरिद्राँकुँकुमँ चैवसिंदूरँ कज्जलान्वितम् ।
सौभाग्य द्रव्य सँयुक्तँ गृहाणाम्बिकया सह । ओ३म अहिरिवभोगै
पर्य्येति०। सौभाग्यद्रव्यँसम० श्रीसाम्ब० ॥ अथ दूर्वांकुराणि ॥ ओ३म
हरिताःश्वेत वर्णा वा पंचत्रिपत्र सँयुताः । दूर्वांकुराः मयादत्ताः गृहाण

भवनाथक । ओ३म काण्डात्काण्डात्प्र० ॥ अथधूपम् ॥ ओ३म वनस्प-
तिरसोद्भूतो गंधाढ्यो गन्ध उत्तमः । आघ्रेयः सर्वदेवानाँधूपोयं प्रति-
गृह्यताम् । ओ३म अवतत्य धनु०॥ धूपमघ्रापयामिश्रीसाम्ब० ॥ अथ-
दीपम् ॥ ओ३म आज्यँ सह्वर्ति संयुक्तँ वह्निनायोजितंमया । दीपँ
गृहाण देवेश त्रैलोक्यतिमिरापह । ओ३म नमस्तऽआयुधाया०॥ दीपँ-
दर्शयामिश्रीसाम्ब० ॥ अथ नैवेद्यम् ॥ ओ३म शर्कराघृत संयुक्तँ मधुरँ
स्वादुचोत्तमम् । उपहार-समायुक्तँ नैवेद्यँ प्रतिगृह्यताम् । ओ३म सानो
महान्त मुत्त० । ओ३म प्राणायस्वाहा० ओ३म अपानायस्वाहा, ॐ व्याना-
नायस्वाहा, ॐ उदानायस्वाहा, ओ३म समानायस्वाहा,। एभिर्पंचभिर्मंत्रैः
ग्रासमुद्रां प्रदर्श्य । इदँ नैवेद्यँ निवेदयामि श्रीसाम्ब०। मध्येपानीयम् ॥
ओ३म एलोसीर लवँगादि कर्पूर परिवासितम् । प्राशनार्थँ कृतँ तोयँ
गृहाण परमेश्वर ॥ ओ३म वरुणस्योत्त० ॥ पुनर्जलम् ॥ ओ३म साधा-
रण जलँ शुद्धँकरस्याँघ्रि विशुद्धये। सत्वँदेवदेवेश गृहाण मम भक्तितः।
ओ३म शन्नोदेवीरभि० । उत्तरोपासनार्थँकर मुख प्रक्षालनार्थं पुन-
र्जलँसम० श्रीसाम्ब० । अथताम्बूलम् । ओ३म पूंगीफलँ महादिव्यँ

नागवल्लीदलैर्युतम् । एलाचूर्णादिसँयुक्तँ ताम्बूलँ प्रति गृह्यताम् ओ३म् यत्पुरुषं० । मुख शोभनार्थमिदँ ताम्बूलम्सम० श्रीसाम्ब० ॥

अथफलानि ॥ ओ३म नानाविधानिपक्वानि फलानि ऋतु जानिच गृहाण देव देवेश प्रसन्नोभवर्वैविभो ॥ ओ३म याः फलीनीर्याऽफ० ॥ एतानिफलानिसम० श्रीसाम्ब० अथदक्षिणाम॥ ओ३म हिरण्य गर्भ-गर्भस्थँहेम बीजँ विभावसोः । अनन्त पुण्यफलदमतःशान्ति प्रयच्छमे ॥ ओ३म हिरण्यगर्भः सम० । इमाँदक्षिणाँसम० श्रीसाम्ब०॥ अथकर्पूरा र्त्तिक्यम ॥ ओ३म कदलीगर्भँसभूतँ कर्पूरँ च प्रदीपितम् । आरार्त्तिक्य-महँ कुर्वे पश्यमेवरदोभव ॥ ओ३म इदँहविः प्रजन० ॥ इदँ कर्पूरा-र्त्तिक्यँ दर्शयामि श्रीसाम्ब०॥ अथप्रदक्षिणा ॥ ओ३म यानिकानिच पापानिजन्मान्तर कृतानिवै । तानिसर्वाणि नश्यन्तु प्रदक्षिण पदे पदे ॥ ओ३म मानस्तोके तनये० । सर्व पापा पनुत्तये प्रदक्षिणाँ करोमि श्री सास्ब० ॥ अथ पुष्पाञ्जलिम॥ओ३मनानासुगन्ध पुष्पाणि यथाकालोद्भ-वानिच । पुष्पाञ्जलिमयादत्ताँ गृहाण परमेश्वर ॥ ओ३म नमस्तऽआ-यु्धा० ॥ इमाँपुष्पाँजलिंसम० ॥ श्रीसाम्ब० ततः सफलार्घम् ॥

ओ३म रक्ष रक्ष महादेव रत्न त्रैलोक्यरक्षक । भक्तानाम भयँकर्ता त्राता-
भव भवार्णवात् ॥ वरदत्वँ वरँदेहि वाँछितँ वाँछितार्थद ॥ इति मँत्रेणा-
र्घ्यंस्थँ पूगीफलँ देवता स्कमुखे निवेद्य ॥ ओ३म अनेन सफलार्घ्येण-
फलदोऽस्तुसदामम । इत्यर्घ्योदकेनदेवताँस्नापयेत् ॥ अथ प्रार्थना ॥
ओ३म भूत्यालेपन भूषितः प्रवि लसन्नेत्राग्निदीपाङ्कुरः कण्ठे पन्नग
पुष्पदाम सुभगो गंगा जलैर्पूरितः । ईषत्साम्र जटाग्र पल्लवयुतोन्यस्तो
जगन्मँडपे शंभुर्मंगल कुम्भता मुपगतो भूयात्सतांश्रयसे । श्रीसाम्ब
शिवाय० ॥ ततो वामावर्त्तेन पुष्पाक्षतैरष्टमूर्त्तीन्पूजयेत् ॥ ओ३म सर्वा-
यक्षितिमूर्त्तयेनमः ॥ ओ३म भवायजलमूर्त्तयेनमः ॥ ओ३म रुद्राया-
ग्निमूर्त्तयेनमः । ओ३म उग्रायवायुमूर्त्तये नमः । ओ३म, भीमायाका-
शमूर्त्तयेनमः ॥ ओ३म पशुपतयेयजमानमूर्त्तये० ॥ ओ३म महादेवाय
सोममूर्त्तये० । ओ३म् ईशानाय सूर्य मूर्त्तये०॥ ततःपूर्वे ओ३म वामदेवा-
यनमः । दक्षिणे ओ३म अघोरायनमः । पश्चिमे ओ३म तत्पुरुषायनमः।
उत्तरे ओ३म ईशानायनमः । मध्ये--ओ३म साम्ब सदाशिवायनमः ॥
पाद्यादिभिर्नैवेद्यांतँ संपूज्य ॥ पुष्पंगृहीत्वा ॥ ओ३म देव देव महादेव

भक्त्यानुगृह्य तत्स्वर । अनुज्ञां देहि देवेश परिवारार्चनाय मे ॥ इमामावरणाँ
पूजां गृहाण सुमुखोभव ॥ श्रीसाम्ब० ॥ अथ मधुपर्केण, वा, शिवा-
र्घ्यामृतेन पुष्पाक्षत युतैः तर्पयेत् ॥ अष्टदलेषु प्रागादिक्रमेण ॥ ओ३म
नन्दिने नमः । इहागच्छेह तिष्ठ । नन्दीं श्रीपादुकां पूजयामि तर्पयामि नमः ।
ओ३म महाकालाय नमः । इहागच्छेह तिष्ठ । महाकालं श्रीपादुकां-
पूजयामि तर्पयामि नमः । ओ३म गणेश्वराय नमः । इहाग० । गणेश्वरं-
श्रीपादुकां० । ओ३म वृषभाय नमः । इहागच्छे० वृषभं श्रीपादुकां० ।
ओ३म भृङ्गिरिटिने नमः। इहाग० भृङ्गिरिटिं श्रीपादु०। ओ३म स्कन्दाय नमः ।
इहाग० स्कन्दं श्रीपा०। ओ३म वीरभद्राय नमः । इहाग० वीरभद्रं श्रीपा०।
ओ३म चण्डीश्वराय नमः । इहाग० । चण्डीश्वरं श्रीपादु०। ततोऽर्घ्या-
मृतम् । ओ३म अभीष्टसिद्धिं मे देहि शरणागतवत्सल । भक्त्या सम-
र्पये तुभ्यमिदमावरणार्चनम् ॥ इदमावरणार्चनं श्रीसाम्बसदाशिवस्य
दक्षिणहस्ते समर्पयामि । इति प्रत्यावरणार्चने । ततः पाद्यादिनैवेद्यान्तं
सम्पूज्य । पुनस्तर्पयेत् ॥ मध्ये-ओ३म ईशानाय नमः । इहागच्छेह०
ईशानं श्रीपादुकां पूज० । ओ३म अघोराय नमः । इहाग० अघोरं श्रीपादु०।

ओ३म् सद्योजातायनमः । इहाग० सद्योजातंश्रीपा० । ओ३म अनन्तायनमः । इहाग०अनन्तंश्रीपादु०। ॐ सूक्ष्मायनमः । इहाग०सूक्ष्मँश्रीपा०। ओ३म शिवायनमः इहाग०शिवँश्रीपा० । ॐ एकपतयेनमः । इहाग० एकपातिंश्रीपा० ओ३म रुद्रायनमः । इहागच्छे० ॥ रुद्रँश्रीपा० । ओ३म त्रिमूर्त्तयेनमः । इहाग० त्रिमूर्त्तिंश्रीपा० । ओ३म श्रीकँठायनमः । इहाग० श्रीकंठंश्रीपा० । ओ३म सत्पतयेनमः । इहाग० । सत्पतिं श्रीपादु० । ओ३म शान्त्यैनमः । इहाग० ॥ शान्तिंश्रीपा० । ओ३म विद्यायैनमः । इहागच्छे० विद्यांश्रीपा०। ओ३म निवृत्त्यैनमः । इहाग०निवृत्तिंश्रीपा०। ओ३म प्रतिष्टायैनमः । इहाग० प्रतिष्ठांश्रीपा० । ओ३म वामदेवायनमः। इहाग० वामदेवंश्रीपा०। ओ३म ज्येष्ठायनमः । इहाग० । ज्येष्ठंश्रीपा०। ओ३म श्रेष्टायनमः । इहाग०। श्रेष्ठँश्रीपा०। ओ३म रुद्रायनमः । इहाग० रुद्रँश्रीपा० । ओ३म कालायनमः । इहाग० कालँश्रीपादुकां० । ओ३म कलविकरणायनमः । इहाग० कलविकरणँ श्रीपा० । ओ३म बलायनमः । इहाग० बलंश्रीपादु० । ओ३म बलविकरणायनमः॥ इहाग० बलविकरणँश्रीपा० । ओ३म बलप्रमथिनेनमः ॥ इहाग बलप्रमथिँश्रीपा० ।

ओ३म सर्वभूतदमनायनमः । इहाग० । सर्वभूतदमनँश्रीपा० ।
ओ३म मनोन्मनायनमः । इहाग० मनोन्मनंश्रीपा० ॥ ततोऽर्घामृतम् ॥
ओ३म अभीष्ट सिद्धिम्मेदेहि शरणाग० ॥ ततः पाद्यादिभिर्नैवेद्यान्तैँ-
पूजयेत् ॥ पुनस्तर्पयेत् । पूर्वे-ओ३म हृदयायनमः । इहाग० हृदयँश्रीपा०।
अग्नये-नँ शिरसेस्वाहा । इहाग० शिरः श्रीपा० । ईशाने-मँ शिखायैव-
षट् । शिखाँश्रीपा० । नैऋत्यां-शिं कवचायहुम् । कवचँश्रीपा० । वायव्ये-
वां नेत्रत्रयायवौषट् । नेत्र त्रयं श्रीपा० । मध्ये-यं अस्त्रायफट् । अस्त्रं-
श्रीपा०॥ ततः परितः॥ओ३म अणिमायैनमः । इहाग०अणिमाँश्रीपा०ॐ
महिमायैनमः।इहाग०महिमाँश्रीपा०।ओ३म लघिमायैनमः।इहाग०लघिमाँ
श्रीपा०ओ३म गरिमायैनमः। इहाग०गरिमांश्रीपा०। ओ३म प्राप्त्यैनमः।
इहाग० प्राप्तिंश्रीपादु० । ओ३म प्राकाम्यैनमः । इहाग० प्राकामींश्रीपा० ।
ओ३म इषितायैनमः । इहाग० । इषिताँश्रीपा० । ओ३म वसितायैनमः ।
इहाग० वसितांश्रीपा० । ओ३म ब्राह्मयैनमः । इहाग० ब्राह्मींश्रीपा० ।
ओ३म माहेश्वर्यैनमः । इहाग० माहेश्वरींश्रीपा० । ओ३म कौमार्यै-
नमः । इहागच्छे० कौमारींश्रीपा० । ओ३म वैष्णव्यैनमः । इहाग०

वैष्णवीं श्रीपा०॥ओ३म वाराह्यैनमः। इहाग० वाराहीं श्रीपा० ॥ ओ३म रुद्राण्यैनमः ॥ इहाग० रुद्राणीं श्री० ॥ ओ३म चामुण्डायैनमः ॥ इहाग०॥ चामुण्डांश्रीपा० ॥ ओ३म चण्डिकायैनमः ॥ इहाग०॥ चण्डिकाँश्री पा० ॥ पुनः प्रागादिक्रमेण ॥ ओ३म असिताँगभैरवायनमः ॥ इहाग० असितांगभैरवँश्रीपा० ॥ ओ३म रुरुभैरवायनमः ॥ इहाग० रुरुभैरवँश्रीपा० ॥ ओ३म चण्डभैरवायनमः ॥ इहाग० चंडभैरवँश्रीपा० ॥ ओ३म क्रोधभैरवायनमः ॥ इहाग० क्रोधभैरवँश्रीपा० ॥ ओ३म उन्मत्तभैरवायनमः ॥ इहाग० उन्मत्तभैरवँश्रीपा० ॥ ओ३म कालभैरवायनमः ॥ इहाग० ॥ कालभैरवंश्रीपादु० ॥ ओ३म भीषणभैरवायनमः ॥ इहाग० भीषणभैरवँ श्रीपा० । ओ३म सँहारभैरवायनमः ॥ इहाग० सँहारभैरवँश्रीपा० ॥ ततोऽर्घ्यामृतम ॥ ओ३म अभीष्टसिद्धिम्मेदेहिशर० ॥ पाद्यादिभिर्नैवेद्यान्तैः पूजयेत् ॥ अथच ॥ ओ३म भवायनमः ॥ इहाग० ॥ भवंश्रीपा० ॥ ॐ ईशानायनमः। इहाग० ईशानं श्रीपा० । पशुपतये नमः। इहाग०। पशुपतिंश्रीपा० । ॐ रुद्रायनमः। इहाग०। रुद्रंश्रीपा०। ॐ उग्रायनमः। इहाग०। उग्रँश्रीपा०॥ ॐ भीमायनमः। इहाग० भीमं

श्रीपा० । ॐ महादेवायनमः । इहाग० ॥ महादेवँश्रीपा० । ॐ अनन्ताय-
नमः । इहाग० अनन्तँश्रीपा० । ॐ वासुकिनेनमः । इहाग० वासुकिंश्री-
पा० । ॐ तक्षकायनमः । इहाग० तक्षकँश्रीपा० । ॐ कुलीरकायनमः ।
इहागच्छे० । कुलीरकँश्रीपा० । ॐ कर्कोटकायनमः । इहाग० कर्कोटकँ-
श्रीपा० । ॐ शँखपालायनमः । इहाग० शँखपालँश्रीपा० । ॐ कम्बला-
यनमः । इहाग० कम्बलँश्रीपा० । ॐ चतुरायनमः । इहाग० चतुरँश्रीपा०
ॐ वैनतायनमः । इहाग० वैनतँश्रीपा० । ॐ पृथिव्यैनमः । इहाग०
पृथिवींश्रीपा० । ॐ सेहस्यायनमः । इहाग० । सेहस्यँश्रीपादु० । ॐ अर्जु-
नायनमः । इहाग० अर्जुनँश्रीपा० । ॐ साकेतायनमः । इहाग० साकेतँश्री-
पा० । ॐ भर्त्रेनमः । इहाग० भर्त्तारँश्रीपा० ॥ ॐ नलायनमः । इहाग०
नलँश्रीपा० । ॐ रामायनमः । इहाग० रामँश्रीपादु० । ॐ हिमवतेनमः ।
इहाग० हिमवँतँश्रीपा० । ॐ निषदायनमः । इहाग० निषदँश्रीपा० । ॐ
श्यामायनमः । इहाग० । श्यामँश्रीपा० । ॐ माल्यवतेयनमः । इहाग० ।
माल्यवँतँश्रीपा० । ॐ पारिजातायनमः । इहाग० पारिजातँश्रीपा० ।
ॐ हेमकूटायनमः । इहाग० हेमकूटँश्रीपादु० । ॐ गन्धमादनायनमः ।

इहाग० । गन्धमाद्यैः श्रीपादुकां ० । ततोऽर्घ्यामृतम् ॥ॐ अभीष्ट सिद्धि मेदेहि शि० ॥ इत्यावरणार्चनम् । श्रीसाम्बशिवस्य दक्षिण हस्ते निवेदयामि ॥ ततः पाद्यादिभिः सम्पूज्य ॥ पुनरावरणम् ॥ ॐ इन्द्रायनमः॥ इहाग० इन्द्रंश्रीपा०॥ ॐ अग्नयेनमः । इहाग० अग्निंश्रीपा० । ओ३म यमायनमः । इहाग० । यमंश्रीपा० । ॐ निर्ऋतयेनमः । श्रीपा० ॥ ॐ वरुणायनमः । इहाग० वरुणंश्रीपा०। ओ३म वायवेनमः। इहाग० । वायुंश्रीपा० । ॐ कुवेरायनमः । इहाग० कुबेरंश्रीपा० ॥ ॐ ईशानायनमः । इहाग० ईशानं श्रीपा० । ओ३म ब्रह्मणेनमः । इहाग० ब्रह्माणंश्रीपा० । ओ३म अनन्तायनमः । इहाग० अनन्तंश्रीपा० ॥ पुनः प्रागादिक्रमेण ॥ ओ३म वँवज्रायनमः । इहाग वज्रंश्रीपा० ओ३म शँशक्तयेनमः ॥इहाग० शक्तिंश्रीपा०॥ ओ३म दँ दण्डायनमः ॥ इहाग० दण्डंश्रीपा० ॥ ओ३म खँ खड्गायनमः॥इहाग०खड्गंश्रीपा०॥ॐ पँ पाशायनमः॥ इहाग०पाशंश्रीपा०॥ ओ३म अँ अङ्कुशायनमः । इहाग० अङ्कुशंश्रीपा०॥ ओ३म गँ गदायैनमः॥ इहाग० गदांश्रीपा० ॥ ओ३म शँ शूलायनमः ॥ इहाग०॥ शूलंश्रीपा० । ओ३म पद्मायनमः ॥ इहाग० पद्मंश्रीपा० । ओ३म चँ चक्रायनमः ॥

इहाग० चक्रँ श्रीपादु० ॥ पुनस्तत्क्रमेण ॥ ॐ ऐरावतायनमः ॥ इहाग०
ऐरावतँश्रीपा० ॥ ओ३म मेघायनमः ॥ इहाँग० मेघँश्रीपा० ॥ ओ३म
महिषायनमः इहाग महिषँश्रीपा०॥ ओ३म प्रेतायनमः॥इहाग प्रेतँश्रीपा०॥
ओ३म मकरायनमः ॥ इहाग० मकरँश्रीपा०॥ ओ३म मृगायनमः॥इहाग०
मृगँश्रीपा० ॥ ओ३म वृषभायनमः ॥ इहाग० वृषभँश्रीपा० ॥ ओ३म
नारायनमः ॥ इहाग० नरँश्रीपा० ॥ ओ३म गरुणायनमः ॥ इहागच्छे
गरुडँश्रीपा० ॥ ओ३म हँसायनमः ॥ इहाग० हँसँश्रीपा० ॥ पुनः पूर्वादि-
दिक्षु ॥ पूर्वे—विप्रवर्ण श्वेताभसहस्त्रफण युतशेषायनम ॥ इहाग०
शेषँश्रीपा० ( अग्नये वैश्यवर्ण नीलाभ पँचशत फणयुत तक्षकायनम) ॥
इहाग० तक्षकँश्रीपादुकाँ० ॥ दक्षिणे—विप्रवर्णं कुङ्कुमाभ सहस्त्र फण-
युत अनन्तायनमः , इहाग० अनन्तँश्रीपा० ॥ नैर्ऋत्याँ--क्षत्रियवर्णा रक्ता
भससशत फणयुत वासुकिनेनम ॥ इहाग० वासुकिँश्रीपा० ॥ पश्चिमे
विप्रवर्णपीताभपँच शतफण युत शँख पालायनमः ॥ इहाग० शँखपालँ
श्रीपादु० ॥ वायव्ये--वैश्यवर्णनीलाभ शतफणयुत पद्मायनमः ॥ इहाग०
पद्मँश्रीपा० ॥ उत्तरे शूद्रवर्णश्वेताभात्रिशत फणयुत कर्कोटकायनमः ॥

गुह्याग० । कर्कोटकं श्रीपा० ॥ ततोऽर्घ्यमृतम् ॥ ओ३म अभीष्ट सिद्धि-
म्मेदेहि वार० ॥ इत्यावरणार्चनम् । ओ३म् तत्सत्साम्बसदाशिवस्य
दक्षिण हस्ते समर्पयामि ॥ पुनः पूर्ववत्पाद्यादिभिर्नैवेद्यान्तैं पूजयेत् ॥
ततः गन्धपुष्पाक्षतयुत जलेनतर्पयत् ॥ ओ३म भवँ देवं तर्पयामि ।
ओ३म शिवंदेवँतर्पयामि । ओ३म ईशानँदेवं तर्पयामि । ओ३म पशु-
पतिंदेवंतर्पयामि । ओ३म रुद्रँदेवंतर्पयामि ओ३म उग्रंदेवंतर्पयामि ।
ओ३म भीमंदेवंतर्पयामि । ओ३म महान्तँदेवं तर्पयामि । ओ३म देवदेवँ-
तर्पयामि ॥ ततः ॥ ओ३म ज्येष्ठायनमः इतिजलम् । ओ३म श्रेष्ठायनम
इतिमधुपर्कम् । ओ३म कालायनमइतिगन्धम् । ओ३म कलविकरण-
यनमः इतिदीपम् । ओ३म भवोद्भवायनम इतिनैवेद्यम ॥ ततोऽष्टपुष्पां-
जलिंनिवेदयेत् ॥ ध्यानपूर्वकम् ॥ ओ३म भवायदेवायनमः ।
ओ३म सर्वायदेवायनमः । ओ३म ईशानायदेवायनमः । ॐ
पशुपतयेदेवायनमः। ओ३म रुद्रायदेवायनमः।ओ३म उग्रायदेवायनमः ।
ओ३म भीमायदेवायनमः । ओ३म महतेदेवायनमः ॥ ततः ॥ ओ३म
भवस्यदेवस्यपत्न्यैनमः । ओ३म सर्वस्य देवस्य पत्न्यैनमः। ओ३म ईशान-

स्यदेवस्य पत्न्यैनमः । ओ३म पशुपतेः देवस्य पत्न्यैनमः । ओ३म रुद्रस्य-देवस्य पत्न्यैनमः । ओ३म उग्रस्यदेवस्यपत्न्यैनमः। ओ३म भीमस्यदेवस्य-पत्न्यैनमः । ओ३म महतोदेवस्यपत्न्यैनमः ॥ ततः धूपदीपनीराजन चामरादिभिः सम्पूज्य ॥ प्रार्थयेत् ॥ ओ३म वन्दे महेशँ सुरसिद्ध सेवितँभक्तसुमैः पूजित पादपद्मँ । विद्याप्रदँभक्त जनैक वँद्यँध्यायेच्छिवँ-कामदुँधमहेशम । योयोगमायां प्रणितोहिपुँसाँ ज्ञानँ विधत्ते खिल-वस्तुनिष्ठम । तँविश्वनाथँ कालिकल्मषघ्नँध्यायेच्छिवँ लिंगगतँ चदेहम् ॥ श्रीमत्साम्बसदाशिवार्पणमस्तु ॥ ततोऽष्टोत्तरशतँ ओ३म नमः शिवा-येति महामँत्र प्रजप्य । पुष्पांजलिंकुर्यात् ॥ ओ३म नमः ओ३म कार-रूपाय नमोऽक्षर वपुः धृते । नमोनादात्मने तुभ्यँनमो बिन्दुकलात्मने । ओ३म नमस्ते लिंगरूपाय नानारूपायतेनमः। त्वँमातासर्व लोकानाँत्वमे-व जगताँपिता । ओ३म त्वँभ्रातात्वँ सुहृन्मित्र स्त्वँप्रियः प्रपि-तामहः । नमस्ते भगवन् रुद्र भास्करा मिततेजसे । ओ३म भीमाय व्योम रूपाय शब्दोरूपाश्रयेनमः । महादेवाय सोमाय अमृताय नमोस्तुते। ओ३म उग्राय यजमानाय नमस्ते कर्म रूपिणे । लिंगानाँशिवरूपाणां

यन्मया पूजनँ कृतम् । तेनत्वँ भगवान् रुद्र वाँछितार्थं प्रयच्छतु । ॐ
तत्सत्ब्रह्मसदाशिवार्पणमस्तु ॥ ततः उत्थाय पुष्पाञ्जलिं कृत्वा ॥
ओ३म् यज्ञेनयज्ञ मयजन्त देवास्तानिधर्माणि प्रथमान्यासन् । तेहनाकँ
महिमान सचन्त यत्र पूर्वेसाध्याः सन्तिदेवाः ॥ ओ३म् राजाधिराजाय
प्रसह्य साहिने नमो वयँवै श्रवणाय कुर्महे स मे कामान् काम कामा-
यमह्यँ कामेश्वरोवैश्रवणो ददातु । कुबेरायवैश्रवणाय महाराजायनमः ॥
ओ३म् स्वस्ति, साम्राज्यँ भौज्यँ स्वाराज्यँ वैराज्यँ पारमेष्ठ्यँ राज्यँ
महाराज्य माधिपत्य मयँ समन्त पर्यायीस्यात् । सार्वभौम सार्वायुष
आन्तादापरार्धात् । पृथिव्य समुद्र पर्यन्ताया एक राडिति । तदप्येष
श्लोकोऽभिगीतो मरुतः परिवेष्टारोमरुत्तस्यावसन् गृहे । आविक्षितस्य
कामप्रेर्विश्वेदेवाः सभासदः ॥ ओ३म् विश्वत श्चक्षुरुत विश्वतो मुखो
विश्वतो बाहुरुत विश्वतस्पात् । सँबाहुभ्याँ धमति सम्पतत्रैर्द्यावा
भूमी जनयन् देवऽएकः ॥ ओ३म् साम्बसदा शिवायनम इति पुष्पां
जलिंसमर्पयं ॥ प्रदक्षिणाँकुर्यात् ॥ ओ३म् सप्तास्यासन्परिधयस्त्रिः
सप्तसमिधः कृताः । देवायद्यज्ञँतन्वानाऽअवध्नन्पुरुषम्पशुम् । ओ३म्

थानिकान्वि० ॥ अथक्षमापनम् ॥ ओ३म आवाहनँनजानामि नजा-
नामि विसर्जनम् । पूजांचैव न जानामिक्षमस्व परमेश्वर ॥ अन्यथा-
शरणँ नास्तित्वमेव शरणंमम । तस्मात्कारुण्य भावेनक्षमस्व जगदीश्वर
गतं पापं गतं दुःखं गतँदारिद्रयमेवच । आगता सुख संपत्तिः पुण्याच्च
तवदर्शनात् ॥ मँत्रहीनँ क्रियाहीनँ विधिहीनँ सुरेश्वर । यत्पूजितँ मया-
देव परिपूर्णं तदस्तुमे ॥ यदक्षर पदभ्रष्टँ मात्राहीनं चयद्भवेत् । तत्सर्वं
क्षम्यताँदेव प्रसीद करुणानिधे ॥ ओ३म करचरण कृतंवाकर्मायजंकर्म-
जँवाश्रवण नयनजँवा मानसँ वापराधम् । विहित मविहितँवा सर्वमेत-
त्क्षमस्व जय जय करुणाब्धे श्रीमहादेवशम्भो ॥ ओ३म त्वमेव माताच
पिता त्वमेव त्वमेव भ्राताच सखा त्वमेव । त्वमेवविद्या द्रविण त्वमेव
त्वमेवसर्वंममदेवदेव ॥ ओ३म साम्ब सदाशिवायनमः ॥ ततः जलसं-
प्रोक्षणम् ॥ ओ३म शतँमयाति शतायुर्वैपुरुषः शतँद्रियरेवेन्द्रियँ वीर्यं
मात्मँधत्ते ॥ ओ३म स्वस्ति मँत्रार्थाः सफलाः सन्तु आराध्यदेवताः सुप्र-
सन्नाः वरदाः भवन्तु ॥ इच्छितमनकामना सँसिद्धिरस्तु । ब्राह्मणा
बृयु स्तथास्तु ॥ ततोऽर्पणमर्घ्योदकेन ॥ ओ३म अनेनावाहनासनपाद्या-

र्घ्याचमनी स्नान वस्त्रोपवस्त्रोपवस्त्रोपवीत गन्ध पुष्पाक्षतधूपदीप नैवेद्य ताम्बूल दक्षिणा प्रदक्षिणा मन्त्र पुष्प रूपै। षोडशो पचारै आवरण पूजनाद्यन्य तमोपचारैश्च, यथाज्ञानेन यथामिलितोपचार द्रव्यैः पूजनाख्य कर्मकृतेन श्रीसाम्बसदा शिवोदेवः प्रीयतांनमम । ओ३म तत्सत्परब्र-ह्मार्पणमस्तु ॥ इत्यर्घ्योदकँ देवता सन्निधौ,उत्सृजेत् ॥ ओ३म शान्तिः॥ सुशाँतिर्भवतु । आचमनँकृत्वा, यथास्थानँगच्छेत् ॥ इति श्री नागपुर मण्डलान्तर्वर्ति रविग्राम निवासी ज्योतिर्विद् नाथोरामशर्मात्मज ज्योतिषी थोबानन्द शर्मसूनु पण्डित जयानन्दशर्म सुत,| उपाध्याय पँ० कृष्णानन्दशर्म जमलोगी ( कान्यकुब्ज ) सँगृहीताहरिहरशिवाराधना-न्तर्गत शिवपूजासमाप्ता ॥ सुसिद्धिर्भूया त्लेखक पाठक याजकेभ्योरह-र्निशम् ॥ शुभँभवतु ॥

# अथपार्थिवपूजाविधिः आरम्भः ।

श्रीगणेशायनमः ॥ अथमृत्तिकाशुद्धिप्रकारः ॥ यथा ॥ आदौमृत्तिकायाँ जलँ प्रोक्षणँ ॥ ओ३म इमँमे वरुणऽश्रुधी हवमद्या च मृडय त्वामवस्यु राचके । ओ३म तत्त्वायामि ब्रह्मणा वँदमानस्तदा शास्ते यजमानो हविर्भिः । अहेड मानो वरुणो हबोद्धयुरुश ँ समानऽआयुः प्रमोषी ॥ ओ३म आपोहिष्ठेतिमँत्रेण चाभिषिंचयेत् ॥ ओ३म जपाग्निः पवित्रेति च ॥ ततः पुष्पाणि गृहीत्वा प्रार्थयेत् ॥ ओ३म सर्वशान्ति प्रदे-देवि मृत्तिके त्रिदिवेश्वरि । निर्माय पार्थिवँलिंगँत्वद्य पूजाँ करोम्यहम ॥ धर्मार्थकाम मोक्षाणाँ त्वमेश्वरि । चतुर्वर्गप्रदेदेवि नानारत्न विभूषिते । त्वँविना परमेशानि क्षुतो मोक्ष कुतोसुखम ॥ इति सम्प्रार्थ्य ॥ मृत्तिकाभिमँत्रयेत् ॥ ओ३म इदँविष्णुः विचक्रमेत्रेधानिदधेपदम । समूढमस्यपा ँ सुरे स्वाहा ॥ ओ३म स्योना पृथिविनो भवान्नृक्षरानिवेशनी । यच्छानः शर्मसः प्रथाः ॥ इत्यभिमन्त्र्य । ओ३म ह्रीं पृथिव्यैनम इति, वा, पृथक् २ मँत्रेः दुग्ध, दधि, घृत, मधु, शर्कराँ, इचनिः क्षिपेत॥

ततः सम्पगालोडनम् ॥ ओ३म मृत्तिके दुष्कृतिहरेह्रीं । ओ३म ह्रौं ह्रीं जूँसः महेश्वरायनमः । ओ३म ह्रौं ह्रीं जूँसः शूलपाणयेनमः । ओ३म ह्रीं गँ लँ गणपतयेनमः । ॐ ऐं ह्रीं क्ष्रँ क्लीं कुमारायनमः । एभिर्मंत्रैः संलोड्य ॥ ततः मृत्तिकायाम् ॥ एतन्ते देवसवितरिति प्रतिष्ठाप्य ॥ ओ मृत्तिके सांगे सपरिवारे सायुधे स शक्तिके सवल वाहने इहागच्छेह तिष्ठेह सुप्रतिष्ठितो वरदोभव ॥ ततःपाद्यादिभिः सम्पूज्य॥ ओ३म मृत्तिकायेनमः इति ॥ अथ संकल्पः ॥ ओ३म अद्येत्यादि० श्रुतिस्मृति पुराणेति हासोक्त सत्फल प्राप्त्यर्थं अमुकराशेः मम वा० अमुष्य यजमानस्य सकल दुरितो पशमनार्थं त्रिविध तापो पशान्तये मम मनोवांछित फलाभिवृद्ध्यर्थं सर्वोपद्रव नाशहेतवे श्रीसाम्ब सदाशिव प्रीतये पार्थिवलिंगार्चन कर्माणि । इमां सुपूजितां मृत्तिकां लिंग निर्माणकर्मणेऽमुका मुक शर्मभ्यो पूर्व पूजितेभ्यो ब्राह्मणेभ्योऽहंदास्ये॥इति संकल्प्यः ॥ पुष्पाणि गृहीत्वा मृत्तिकां प्रार्थयेत् ॥ ओ३म अश्व क्रान्ते-रथ क्रान्ते विष्णु क्रान्ते वसुंधरे । मृत्तिके हरमे पापं यन्मया दुष्कृतं

कृतम् ॥ उद्धृतासि वराहेण कृष्णेन शत बाहुना । मृत्तिके त्रस्म पुत्रासि कश्यपेनाभिवंदिता । त्वयाहृतेन पापेन गच्छामि परमाँगतिम् ॥ ॐ तत्सत्साम्ब शिवार्पणमस्तु ॥ आचम्य ॥ यथास्थानँ गच्छेत् ॥ इति मृत्तिका शुद्धिः प्रयोगः ॥ अथ ब्राह्मणाः वक्ष्यमाण विधिना लिंगानां निर्माणँ कुर्युः ॥ ओ३म हरायनम इति मृदा हरणँ । ओ३म महेश्वराय-नमः इति सँघट्टनम् । ओ३म शूलपाणयेनम इति साक्षतँ पीठे निधा-पयेत् । गणपतिंतु । ओ३म ह्रीं गं लं गणपतयेनमः इति मँत्रेण गणपति प्रतिमाँ निर्मिमेत् । संस्थाप्य । सम्पूज्य । कुमारन्तु ॥ ओ३म ह्रीं क्लूँ क्लीं कुमारायनमः । अनेन मँत्रेण कुमारँ च सँस्थाप्य० प्रपूजयेत् ॥ नन्दीगणँच ॥ ओ३म नँ नँदिने शिव वाहनाय धर्ममूर्त्तयेनमः । इति नँदी निर्माप्य० सँस्थाप्य, सम्पूज्यश्च । ततः पार्थिवेश्वर निर्माणानन्तरँ शिव पूजा प्रयोग विधिना साँगोपाँग पूजनँ कृत्वा ॥ शिव मँत्रँ जपेत् ॥

———

# शिव मंत्राणि ।

ओ३म नमः शिवायेति षडक्षरँ सर्वंत्र प्रसिद्धम् ॥ मृत्युँ जयमँत्रश्च ॥
ॐ त्र्यम्बकँ यज महे सुगन्धिम् पुष्टि वर्द्धनम् । उर्व्वारुकमिव बन्ध
नान्मृत्योर्मुक्षीयमामृतात् । त्र्यम्बकँ यज महे सुगँधिं पति वेदनम्।
ऊर्व्वा रुकामिव बन्धना दितो मुक्षीयमा मुतः ॥ इति ॥ वा० ओ३म
नमो भगवते रुद्राय स्वाहा ॥ अथमहा मृत्युञ्जय मँत्रः ॥ ओ३म ह्रौं
ओ३म जूँ ओ३म सः ओ३म भूः ओ३म भुवः ओ३म स्वः ओ३म
त्र्यम्बकँयज यजामहे सुगन्धि पुष्टि वर्द्धनम् । उर्व्वारुकमिव बन्धनान्मृत्यो
र्मुक्षीय मामृतात । ओ३म स्वः ओ३म भुवः ओ३म भूः ओ३म सः
ओ३म जूँ ओ३म ह्रौं ओ३म त्र्यम्बकँयज यजा महेसुगन्धि पातिवेदनँ
उर्व्वारुक मिव बन्धनादितो मुक्षीयमा मुतः ॥ इति शिव मँत्रँ प्रजपेद
ष्टोत्तर शतवारँ ॥ इति मँत्राः ॥ ततः पुष्पाणि गृहीत्वा ध्यानँकुर्यात ॥
ओ३म ध्यायेन्नित्यं महेशँ रजत गिरिनिभँ चारु चन्द्रावतँसँ रत्नाकल्पो
ज्वलाँगँ परशु मृगवरा भीतिहस्तँ प्रसन्नम । पद्मासीनँ समँतास्तुति

ममर गणैर्व्याघ्र कृत्तिं वसानँ विश्वाद्यँ विश्ववद्यँ निखिल भयहरँ पँच वक्त्रं त्रिनेत्रम् ॥ ओ३म तत्सत् मृत्युँजयाय सदाशिवायनमः ॥ ततो जल मुत्सृजेत ॥ ओ३म गुह्याति गुह्यगोप्तृत्वँ गृहाणास्मत्कृतँ जपँ । सिद्धिर्भवतुमेदेवत्वत्प्रसादान्महेश्वर । ओ३म् मृत्युँजयमहारुद्र त्राहिमाँ शरणागतम् । जन्ममृत्यु जरारोगैः पीडितं कर्म बन्धनैः इतिसम्प्रार्थ्य ॥ अतेनमृत्युँजय जपाख्येन कर्मणा श्रीमहा मृत्युंजयः सदा शिवोदेवता प्रीयताँ न मम ॥ इतिपार्थिव पूजा विधिः समासः ॥

# अथ पूजोपयोगिप्रमाणम् ।

प्रतिमाप्रमाणम् । सौवर्णीराजती ताम्री मृण्मया मात्तिकीतथा चित्रजा-पिष्ट लेपोत्था निजावित्तानुसारतः ॥ आमापातल पर्यंता कर्त्तव्या

शक्ति संभवे ॥ अंगुष्ठ पर्वमारभ्यवितस्त्यवधिकास्मृता । गृहेस्तुप्रातिमा

| अथश्री पार्थिवेश्वर पूजने शतसंख्या लिंग स्थापन विधिचक्रम्। |
|---|
| ००० |
| ०००१ |
| ००० |
| ०००००००००००००१२ |
| ००००००००००००११ |
| ००००००००००००११ |
| ०००००००६ |
| ००००००५ |
| ००००४ |
| ०००३ |
| ००००४ |
| ०००००५ |
| ०००००००६ |
| ०००००००७ |
| ००००००००८ |
| ०००००००००१ |

कार्या नाधिका शस्यते बुधैः द्रव्या भा ॥ द्रव्यलाभे पयोग्राह्यं मध्वलाभे तथागुडः । घृतप्रतिनिधिः कार्यः पयो वा दधिवा नृप॥रात्रौ-दर्जनीगोपचाराः ॥ आसन स्नान वस्त्राणि भूषणं च विवर्जयेत् । रात्रौ देवार्चनेतैश्च पदार्थैः द्वादशैकमात् ॥ वा०द्रव्याभावे । द्रव्या भावे प्रदातव्याःक्षालिता स्तण्डुला शुभाः । तण्डुलान्प्राक्षिपेत्तेषु द्रव्या भावेतुतत्स्मरन् ॥किन्तु ॥ नाक्षतै रर्चयेद्विष्णुंनतुलस्या गणाधिपम् ।

न दूर्वयायजेद्देवीं बिल्वपत्रैर्भास्करम ॥ उन्मत्त मर्क पुष्पैश्च विष्णोर्वै-

ऽर्घंसदाबुधैः॥ शंखादर्घंविधये ॥ महाभिषेकँ सर्वत्र शँखेनैव प्रकल्पयेत् । सर्वेष्वेव प्रशस्तोऽजवः शिवसूर्यार्चनंविना ॥ प्राणप्रतिष्ठायाम् ॥ शालिग्राम शिलायास्तु प्रतिष्ठानैव विद्यते । बाण लिंगानिराजेन्द्र ख्यातानि भुवनत्रये । नप्रतिष्ठा न संस्कार स्तेषामावा हनं तथा । शैलीं दारु मयीं हैमींधा त्वाद्या कार सँभवान् । प्रतिष्ठाँवै प्रकुर्वीत प्रासादेवा गृहेनृप ॥

॥ इति ॥



## जपादौ कर्णिमाला प्रार्थना ॥

ओ३म माले माले महामाले सर्वतत्व स्वरूपिणि । चतुर्वर्ग स्त्वयिन्य स्त स्तस्मान्मे सिद्धिदाभव । ततः पाद्यादिभिर्मालाँ सम्पूज्य ॥ ओ३म ह्रींमालायैनमः । इतिदक्षिणकरेनिधाय ॥ शिरसाभिवँद्य जपँ कुर्यात् ॥ जपान्तेच ॥ ओ३म त्वँमाले सर्वदेवानाँ सर्वे सिद्धि प्रदामता ॥ तेनसत्येनमे सिद्धिंदेहि मातर्नमोस्तुते । इति सम्प्रार्थ्य ॥ अर्घ्योदकेन ॥ ॐ

विलिख्य विलिख्य लिखेद्भूपुरमेककम् । इति ॥ अथमँत्रोद्धारः ॥ ओ३म कालीबीज त्रयँ प्रोक्ता लज्जाबीजद्वयंततः । हूँकारैद्वौ ततः पश्चाद्दक्षिणे कालिके ततः । काली बीजत्रयँ तस्मा ल्लज्जाबीजँ द्वयँ पठेत् । द्वौ-चस्वाहान्त हूँकारौ कालमंत्र उदाहृतः । इति ॥ अथमँत्रः ॥ ओ३म क्रीं क्रीं क्रीं ह्रीं ह्रीं हूँ हूँ दक्षिणे कालिके क्रीं क्रीं क्रीं ह्रीं ह्रीं हूँ हूँ स्वाहा । इति श्रीकालिकायाः मूलमँत्रः ॥ अथ श्रीदेव्याः वा० पंचस्थपूजा प्रयोगः ॥ तत्र कर्त्तास्नातः शुचिः शुद्धाम्बरधरः पूजास्थाने आगत्य पूजोपयोगि सामग्रीं सम्पाद्य, स्वगुरुंप्रणम्य० स्वेष्ट देवताँ च प्रणम्य दिक्पाल क्षेत्रपाल वास्तुपुरुष ब्राह्मणादीन्सम्पूज्य, नमस्कृत्य च दीपंच सम्पूज्य गणपत्यादि नवग्रहाँश्च सम्पूज्य ॥ संकल्पँ कुर्यात् ॥ ओ३म अद्येत्यादि० अमुक राशि रमुक शर्म्माहँ मम वा० अमुष्य यजमानस्य सकल दुरितो पशमनार्थं सर्वै श्वर्याभि वृद्धये श्रुति स्मृति पुराणेतिहासोक्त सत्फल प्राप्तये अखिल दुःख दौर्भाग्य दुःस्वप्नदुश्चरित्रादि दुष्ट फल दूरी करणार्थं ज्योतिः शास्त्रोक्त जन्म, वर्ष गोचर सामयिक सूर्यादि नवग्रह जनितानिष्टफल निराकरणार्थं एकादश स्थान स्थित वच्छुभ

फल प्राप्तये चभूत प्रेत पिशाच डाकिन्या दिजनितसर्वोपद्रव नाश हेतवे सर्वत्रयशो विजय लाभादि अप्राप्तलक्ष्मीप्राप्त्यर्थं प्राप्यर्थं प्राप्तलक्ष्म्याश्चिर संरक्षणार्थं पुत्रपौत्रादि सन्तते रविछिन्न वृद्ध्यर्थं० श्रीस्वेष्ट देवतानुकूलता सिद्ध्यर्थं त्रिविधतापो पशमनार्थं त्रिविधपापलुप्त्यर्थेच चतुर्वर्ग सिद्ध्ये यथाज्ञानेन यथा लब्धोपचारद्रव्यैः श्रीस्वेष्टदेवता याः पूजन कर्माहं करिष्ये ॥ पुनश्च । तत्रादौ शरीर शुद्ध्यर्थं भूतशुद्धिंच करिष्ये ॥ ततः आचान्तः कुश हस्तो मौनी सर्व पापोपशमनार्थं श्लोक द्वयंपठेत् ॥ तद्य था ॥ ओ३म देवित्वं प्रकृतं चित्तं पापाक्रान्त मभून्मम । तन्निःसरतु चित्तान्मे पापहुं फट्चतेनमः ॥ सूर्यः सोमोयमः काल महा भूतानि पंचच । एते शुभाशुभः स्येहकर्मणोमे वसाक्षिणः इतिपठित्वा । मूलेनाचम्य । ओ३म वज्रोदके हुंफट्स्वाहा । इति जलं गृहीत्वा । हूंस्वाहा- इतिकरेआदाय । ओ३म ह्रीं विशुद्ध सर्व पापानि शमया शेषविकल्प मपनयहूंफट् स्वाहा । इति पादौ प्रक्षाल्य । ओ३म ह्रीं स्वाहा इतिपुनराचम्य । पुनस्त्रिवार माचमेत् । यथा ॥ ओ३म ऐं कालिकायै नमः । ओ३म ऐं कपालिन्यै नमः । ओ३म ऐं कुल्लायैनमः इति । ततः जलेन हस्तौ प्रक्षाल्य ॥ सामान्यार्घ्यं स्थापनं कुर्यात् ॥ स्ववामे० त्रिकोण

ओ३म शताभिषेके पदे पदे हूँ फट्स्वाहा । ओ३म पुष्पकेतुराजार्हते ॥ ओ३म पुष्पे पुष्पे महा पुष्पे सुपुष्पे पुष्पसँभवे० पुष्पश्च यावकीर्णो हूँ फट्स्वाहा । इति पुष्पाभिमँत्रणम् ॥ अन्यानि पूजोपकरणानि सामान्यार्घोदकेना भिषिच्य० धेनु मत्स्य मुद्रे दर्शयित्वा० हूँ फट् । इतिचतुर्दिक्षु कोष्ठ छ्यानिरीक्ष्य० ॥ गौर सर्षपानादाय ॥ ओ३म अपसर्पन्तु तेभूतेति पठन् । चतुर्दिक्षुक्षिपेत् ततः वामे ॥ ओ३म गुरुभ्योनमः ॥ ओ३म परमगुरुभ्योनमः । ओ३म परात्पर गुरुभ्योनमः ॥ ओ३म परिमेष्ठि गुरु भ्योनमः । दक्षिणे० ओ३म गणेशायनमः ॥ अग्रे० ओ३म दक्षिणकालिकायैनमः ॥ इति प्रणमेत् ॥ ततो हस्त शुद्धिं कुर्यात् ॥ हूँ इति अँगुल्यग्रेण पुष्पमादाय० हौँ इति कराभ्याँ मर्दयित्वा० क्लीं० इति दक्षिण हस्तेन सम्मृज्य ओ३म तत्सत् इति वामहस्ते नाघ्राय० हौँ वा० तेसर्वे विलयँ यातुयेमाँ हिंसँतिहिंसका। मृत्युरोग भय क्रोधाः पतन्तुरिपुमस्तके ॥ इतिमँत्रेण ऐ शान्याँदिशि पुष्पँत्यजेत् ॥ परित्याग हृष्णाराचमुद्रया ॥ इत्यासन शुद्धिः ततः शिराशि० ओ३म भैरव भाज-

येनमः। मुखे ओ३म् उष्णिक् छन्दसे नमः। हृदये ॐ दक्षिण कालिकायैनमः गुह्ये ओ३म क्रीं बीजायनमः। पादयोः ओ३म हूँ शक्तयेनमः। सर्वांगे ओ३म क्रीं कीलकायनमः॥ ततः ओ३म क्रां हृदयायनमः। ओ३म क्रीं शिरसेस्वाहा। ओ३म क्रूँ शिखायैवषट्। ओ३म क्रैं कवचाय हुँ। ओ३म क्रौं नेत्र त्रयाय वौषट्। ओ३म क्रः अस्त्रायफट्॥ अथ ध्यानम्॥ ओ३म सिद्धाद्याँ शिवगेहिनीं करल सत्पाशाँ कुशाँ भैरवीं भक्ताभीष्ट वर प्रदाँ सकुशलाँ संसार बन्धच्छिदाम्। पीयूषाम्बुधि मन्मथोद्भवरताँ संविद्विलासाँ पराँ वीरा साधित पादुकाँ सुविजयाँ ध्याये दजाद्यम्भोहितीम। इति ध्यात्वा। क्रोंमितिबीजेन प्राणायामँ कुर्यात। ततः स्वामासेयपीठाँ संस्थाप्य तत्रैवधूपपात्रं च सँस्थाप्य दक्षिणे दीप पात्रँ निधाय फट् इति मद्यपात्रस्य नम इति गन्धम् वषट् इति पुष्पम् अक्षतैश्च सम्पूज्य॥ देव्यर्घ्यपात्रस्थापनं कुर्यात्॥ आदौ आत्म यंत्र योन्यध्ये त्रिकोण वृत्त षट् कोण चतुरस्त्र मँडलँ विरच्य। हुँ। इति विलिख्य, पुष्पाक्षतैः पूर्वे, पूर्णगिरि पीठायनमः। दक्षिणेउड्डियान पीठायनमः। पश्चिमे॰ कामरूप पीठायनमः। उत्तरेजालँधर पीठाय-

नमः । मध्ये- ओ३म आधार शक्त्यैनमः इति सँपूज्य । ततः भूमौ त्रिकोण गर्भं षट् कोण भूषिताँ यँत्रिकाँ विलिख्य, नम इति सामान्या-र्घ्य जलेनाभ्युक्ष्य तत्र आधारँ सँस्थाप्य, धाँ धीं धूँ हसक्षमल वर यूँ धर्मं प्रद वह्नि मण्डलात्मने कालिकार्घ्य पात्रा धाराधनमः । ततस्मिना-धारे कलाः सँपूजयेद्यथा ॥ ओ३म यँ धूम्रार्चिषेनमः । ओ३म रँऊष्मा यैनमः ॥ ओ३म लँ ज्वालिन्यैनमः । ओ३म वँ ज्वालिन्यैनमः । ओ३म विस्फुलिंगिन्यैनमः । ओ३म पँ सुश्रियैनमः । ओ३म सँ सुरूपायैनमः। ओ३म हँ कपिलायैनमः । ओ३म लँ हव्यवाहायैनमः ॐ क्षँ कव्यवाहा-यैनमः । इति वह्नि दशकलाः सम्पूज्य । तदुपरि ताम्राघ्यपात्रँ फट् इति प्रक्षालितँ सँस्थाप्य । ओ३म श्रीं ह्रीं हूं ह स क्ष म ल न र सूँ व सुप्रद तपिन्यादि द्वादश कलात्मने अर्क मण्डलाय कालिकार्घ्य पात्राय-नमः ॥ तस्मिन्पात्रे पूर्वादिक्रमेण कलाः पूजयेद्यथा । ओ३म कँ भँ तपि-न्यैनमः । खँ बँ तापिन्यैनमः । ओ३म गँ फँ धूम्रायैनमः । ओ३म घँ पँ मरीच्यैनमः । ओ३म ङँ नँ ज्वालिन्यैनमः । ओ३म चं धं रुच्यैनमः। ओ३म छं दं सुषुम्णायैनमः । ओ३म जं थं भोगदायैनमः । ओ३म झं

तें विश्वायैनमः। ओ३म यं पं बोधिन्यैनमः। ओ३म टं ठं धारिण्य नमः। इति सम्पूज्य। ततोऽर्घ्यपात्रमध्ये। मूलेन त्रिकोण षट्कोण वृत्तं विलिख्य यँ रँ वँ इति च विलिख्य। ॐ सों सीं सूँ सलक्ष मलवर यूँ कामकला मृताादि षोडश कलात्मने सोमण्डलाय श्री दक्षिण कालिकार्घ्यां मृताय नमः। इति सम्पूज्य। कलाः पूजयेत्। ओ३म अँ अमृतायैनमः। ओ३म आँ मानदायैनमः। ओ३म इँ पूषायैनमः। ओ३म ईं तुष्ट्यैनमः। ओ३म उं पुष्ट्यैनमः। ओ३म ऊं रत्यैनमः। ओ३म ऋं धृत्यैनमः। ओ३म ॠ शशिन्यैनमः।। ओ३म लृं चंद्रिकायैनमः। ओ३म ॡं कान्त्यैनमः। ओ३म एं ज्योत्स्नायैनमः। ओ३म ऐं श्रियैनमः ओ३म ओं प्रीत्यैनमः।। ॐ औं अंगदायैनमः। ॐअं पूर्णायैनमः। ॐअः पूर्णामृतायैनमः इति सम्पूज्य। एलालवंग कर्पूरादि सुगन्धि च निःक्षिप्य तस्मिन्सुगन्धादि द्रव्ये अं १६ कँ १६ खँ १६ तथा हँ, लं, क्षँ, इति संलिख्य। ततः। ॐ गँगेच यमुने चैवेति अर्घ्यपात्रं जलेन प्रपूर्य। अंकुश मुद्रया सूर्य मंडलात्तीर्थाना वाह्य नमहति गन्धं वषट् इति पुष्पम्। इति सम्पूज्य। अस्त्रमुद्रया ऽऽ छाद्य धेनु मुद्रयाऽमृतीकृत्यः योनि मुद्रया

परमी कृत्य शंखमुद्रांप्रदर्श्य मनसैव श्रीस्वेष्ट देवतां ध्यात्वा । ततः
देव्य मृत श्रीपात्र स्थापनं कुर्यात् ॥ स्वदक्षे भूमौ षट्कोणं विलिख्य- तद्ब
हि श्चतुरस्र मँडलँ कृत्वा सम्पूजयेत् । पूर्वेग्लूँ गगन रत्नेभ्योनमः ।
दक्षिणे-स्लूं स्वर्ण रत्नेभ्योनमः । पश्चिमे- प्लूँ पाताल रत्नेभ्योनमः ।
उत्तरे-म्लूँ मनुष्य रत्नेभ्योनमः । मध्ये-नूंनाग रत्नेभ्योनमः ॥ तत्रपात्रं
संस्थाप्य । तत्र देव्य मृतादि द्रव्यँ निधाय दक्षिण हस्ते नाछाद्य ॐ ऐं
मूलँ अमृते अमृतोद्भवे अमृत वर्षिणि अमृतँ स्रावय २ सां जूँ जूँ अमृते
श्वर्यै स्वाहा । इति त्रिधा जप्त्वा । त्र्यम्बकेन- गायत्र्याच । ततः ॐ
शाँ शीं शूँ शैं शौं शः शुक्र शापाविमोचितायै स्वाहा । इति त्रिधा
जप्त्वा । ततः पुष्पँ गृहीत्वा अमृतेश्वरीं ध्यायेत्। ॐ अखँडैकरसानन्द
करे पर सुधात्मनि । स्वच्छन्द स्फुरणा मत्र निधेह्य मृत रूपिणि ॥ सूर्य
कोटि प्रतिकाशँ चन्द्र कोटि सुशीतलम् । अष्टादश भुजं देवँ पँच वक्त्रँ
त्रिलोचनम् । अमृतार्णव मध्यस्थँ ब्रह्म पद्मो परिस्थितम् । वृषारूढँ
नील कंठ सर्वाभरण भूषितम् । कपाल खट्वांग धरं घँटा डमरु नादितम्।
पाशांकुश धरँदेवँ गदा मुशल धारिणम् । खँगखेटकपट्टीशँ मुद्गरो

च्छल क्लांतिनम् । विच्छिन्न खेद कँ क्षुब्ध परदाभ्य मालिनम् । लोहितं देव देवेश भावयेत्साधकोत्तमः । भावयेच्च तुरां देवीं चन्द्र कोटि सुत प्रभाम् । हिम कुन्देन्दु धवलाँ पंच वक्त्राँ त्रिलोचनाम् । अष्टादश भुजाँ युक्ताँ सर्वानन्द करोद्यताम् । प्रहसंतीं विशालाक्षीं देवदेवस्य सन्मुखीम् । इतिध्यात्वा । पुनः हस्तेनाच्छाद्य । हसक्ष मल वर यूँ आनन्द भैरवाय वौषट् । हसक्षमलवर यूँ आनन्द भैरव्यै वौषट् ॥ ततः ॥ ॐ आनंद भैरवानंद भैरवीं श्रीपादुकाँ पूजयामि तर्पयामिनमः ॥ पुनरञ्जलिं शीर्षस्थां ॥ ॐ क्लीं कुलस्थामृताकारे सिद्धि ज्ञान करेश्वरे । अमृतत्वं निधेह्यत्र वस्तुनिःक्लिन्न रूपिणी । हँसः तर्पयामि पुनः । सौं तद्रूपे कर साम्यंच कृत्वाह्येतत्स्वरूपिणी । भूत्वा कुला मृताकारं मयि विस्फुरणं कुरु । हंसं तर्पयामि । ततः मत्स्य मुद्रयाऽऽच्छाद्य धेनुयोनि मुद्रे प्रदर्श्य मूलेन गंध पुष्पाद्यैः संपूज्य । तद्वामे पाद्य पात्रं स्थापयेत् । मूलेन त्रिकोण वृत्त चतुरस्रे आधार शक्तिं संपूज्य पात्रं संस्थाप्य मूलेन जलेन प्रपूर्य नमइति गंधम् । वषट्इति पुष्पम् । अक्षतांश्च निवेदयेत् । श्रीदेव्यर्घ्यं पात्रस्थ जलं च निःक्षिप्य धेनुयोनि मुद्रे दर्शयेत् । तत्पार्श्वे

आचमनीय पात्रम्। अस्य स्थापन पाद्य पात्र वत्कार्यम् ॥ तत्प्रोक्षण मधु पर्के पात्रम्। अस्यापि स्थापन विधिस्तु पाद्य पात्रवत्तेन किन्तु। मधुवाता ऋतायते० इत्यभिमँत्रयेत्। तद्दक्षे स्नानीय पात्र विधिश्च पाद्य पात्र वत्कार्या। एषु सर्वेषु पात्रेषु श्रीदेव्याः विशेषार्घ्ये जलँ प्रक्षिपेत्। ततः श्रीपादुका मूलेन-वा-मधुपर्केण विशेषार्घ्य पात्रस्थ जलेन वा पुष्पाक्षतैः सहदेवीं हृदि त्रिवारँ तर्पयेत्। तर्पणानि। तत्वशुद्ध या अगानिऔं शुद्ध योगेन। तर्पणा नि तत्व शुद्धया आत्म तत्व शुद्धिरादौ ॥ ॐ प्राणापान व्या नो दान समाना मे शुद्धयन्ताम्। ज्योतिरहं विरजा विपाप्मा भूयासँ स्वाहा। ओ३म् पृथिव्यप्तेजो वायवा काशानि मे शुद्धयन्ताम्। ज्योतिरहं० ओ३म् मत्यहंकार बुद्धिमनः श्रोत्राणि मे शुद्धयन्ताम्। ज्योति० ओ३म् शब्द स्पर्श रूप रस गंधाकाशानि मे शुद्धयन्ताम् ज्योति०। ओ३म् वायु तेज सलिल भूम्यात्मनो मे शुद्धयन्ताम् ज्योति०। ओ३म् त्वक् चक्षु जिह्वा घ्राण वचांसि मे शुद्धयन्ताम् ज्योतिरहं०। ओ३म् पाणिपाद पायू पस्थ वाक्तानि मे शुद्धयन्ताम् ज्योतिरहं विरजा विपाप्मा भूयासं स्वाहा ॥ इत्यात्मतत्व शुद्धिः ॥ ततः मंडप वा के

ईशाने-मण्डलं विधाय- बटुकाय बलिं दद्यात् । मंडलं पाद्यादिभिः सम्पूज्य । तत्र बटुकादि बलि द्रव्यं संस्थाप्य । पाद्यं समर्पयामि एष गन्धः एतानक्षतानि आनि पुष्पाणि समर्पयामि वं बटुकायनमः । बटुक प्रीति कारक बलिद्रव्यायनमः । एवं सम्पूज्य । ओ३म् ए ह्येहिदेवी पुत्र कपिश जटाभार भास्वर ज्वलत् पुत्र सर्व विघ्नान्नाशय२ सर्वोपचार सहित बलिं गृह्ण२ स्वाहा । इत्यनामिका गुष्ठ योगेन जलं त्यजेत् । पुष्पं गृहीत्वा ओ३म् ऊर्ध्वं ब्रह्माण्डतो वादि विगल सुतले भूतले निष्फलेवा पाताले वानलेवा सलिल पवन योर्यत्रतत्र स्थितावा क्षेत्रे पीठोपपीठादिपुकृत सुपद्म पुष्प धूपादिभि र्वा प्रीता देवाः सदाताः शुभवलि विधिना यान्तु देवेन्द्र तुल्याः । बटुकायनमः । ततः आग्नेये-पूर्वनमण्डलादि विधिं कृत्वा द्रव्यंच संस्थाप्य प्रपूज्य ॐ यां यीं यूं यैं यौं यः योगिनिभ्यः हूँ फट् स्वाहा । इति कनिष्ठिकां गुष्ठ योगेन जलं त्यजेत् । ॐ ऊर्ध्वं ब्रह्माण्ड० । योगिनीभ्योनमः । ततः वायव्ये--पूर्व वन्मण्डलं कृत्वा द्रव्यादिकं च संस्थाप्य पाद्यादिभिः सम्पूज्य ॐ क्षां क्षीं क्षूं क्षैं क्षौं क्षः क्षेत्रपाल धूप दीपादि सहित बलिं गृह्ण२ स्वाहा । इत्यं गुष्ठ तर्जनी योगेन जलं त्यजे-

त् । ॐ ऊर्ध्वं ब्रह्माण्ड० । क्षेत्रपालायनमः । नैऋत्ये-पूर्ववन्मंडलँ कृत्वा
द्रव्यँ च संस्थाप्य सम्पूज्य ॐ गां गीं गूँ वरद२ गणपते सर्वजनं मेव आ
नायनय२ सर्वोपचार सहित बलिं गृह्ण२ स्वाहा । इति मुष्टिमध्य स्योगुलि
ना जलँ त्यजेत् ॥ ॐ ऊर्ध्वं ब्रह्माण्ड० । गणपतयेनमः । ततोवाम भागे ।
साधार पात्रँ संस्थाप्य तस्मिन्मंडलँ विरच्य पूर्ववद्भ्यर्च्य बलि द्रव्यं च
सँस्थाप्य सम्पूज्य । ओ३म् ह्रीं सर्वविघ्न कृद्भ्यः सर्व भूतेभ्यो हूँफट्
स्वाहा । इति तत्व मुद्रया जलँ त्यजेत् । ॐ ऊर्ध्वं ब्रह्माण्ड० सर्वभूते-
भ्योनमः । इति बलि प्रयोगः ॥ ततः हस्तौपादौ प्रक्षाल्य शुद्धोदकेनाचू-
म्य । यँत्रादिकस्य प्राण प्रतिष्ठाँ कुर्यात् ॥ पँचगव्येन पँचामृतेन वा, यँत्रो
यथा ओ३म् अस्य श्री प्राण प्रतिष्ठा मंत्रस्य ब्रह्मा विष्णु महेश्वरा ऋष-
यः ऋग्यजुः सामाथर्वाणि छँदांसि क्रिया मय वपुः प्राणा रव्या देवता
आँ बीजँ ह्रीं शक्तिः क्रौं कीलकं अस्याँ यँत्रादिकस्य नूतन मूर्त्तौ प्राण प्र-
तिष्ठापने विनियोगः ॥ अनामिकाँ गुष्ठ योगेन । ओ३म् आं ह्रीं क्रौं यँ रँ
लँ वँ शँ षँ सँ हों ॐ क्षँ सँ हँ सः ह्रीं ॐ हँ सः श्री दक्षिण कालिकायाः
पञ्चकोण गर्भ त्रिकोण त्र्यष्ट दल भूपुरात्मक यँत्रस्य प्राणा इह प्राणाः

पुनश्च ॥ ओ३म् आँ ह्रीं क्रौं० श्री देव्याः जीव इहस्थितः ॥ पुनः ॥ ॐ आँ ह्रीं क्रौं० श्री देव्याः सर्वेन्द्रियाणि इहस्थितानि ॥ अथच ॥ ओ३म् आँ ह्रीं क्रौं० श्रीदेव्याः षट्कोण गर्भ त्रिकोण अष्टदल भूपुरात्मक [illegible] वाङ्मनः चक्षुः श्रोत्र जिह्वा घ्राण प्राण पाणि पाद पायू पस्था- [illegible] चिरं तिष्ठन्तु स्वाहा ॥ ततः। ओ३म् यंत्र राजाय विद्महे [illegible] धीमहि तन्नो यंत्रः प्रचोदयात् । इति दशधाजप्त्वा । ओ३म् पूतम् [illegible] सवितरिति च प्रतिष्ठाप्य । ओ३म् ह्रीं आधार श क्ति भ्योनमः । इति मंत्रेण पाद्यादिभिः सम्पूजयेत् ॥ ततः रक्ता क्षत पुष्प पुंजैः ॥ ॐ जयायैनमः । ॐ विजयायैनमः । ॐ अजितायैनमः । ॐ अप- राजितायैनमः । ॐ नित्यायैनमः । ॐ विलासिन्यैनमः । ॐ दोग्ध्यैनमः । ॐ अघोरायैनमः । ॐ मंगलायैनमः । इति पीठ शक्तिमभ्यर्च्य । ॐ ह्रीं कालिका योग पीठात्मनेनमः । ॐ ह्री सदाशिव महाप्रेत पद्मासनेनमः ॥ ततः पुष्पाक्षत पुंजं निधाय देवीं ध्यायेत ॥ ओ३म् कराल वदनां घोरां मुक्त केशीं चतुर्भुजाम् । कालिकाँ दक्षिणाँ दिव्याँ मुंडमाला विभूषिताम् सद्यः छिन्न शिरःखंग वामो र्ध्वाधः करां बुजाम् । कालिकां दक्षिणां

दिव्यां मुंडमाला विभूषिताम् । अभयं वरदँ चैव दक्षिणा दोध्वे पाणि-
काम् । महामेघ प्रभाश्यामां तथा चैव दिगंवराम् । कँठाव सक्त मुण्डा
ली गल रुधिर चर्चिताम् । कर्णावतँ सतानीत शवयुग्म भयानकम् ।
घोर दँष्ट्रा करा लास्याँ पीनोन्न तपयो धराम् । शवानाँ कर सँघातैः
कृत कांची हसन्मुखीम् । दन्तुराँ दक्षिण व्यापि मुक्त लम्ब कचोच्चयाम्
शवरूप महा देव हृदयोपरि सँस्थिताम । शिवाभिर्घोर रूपाभिश्चतुर्दि
क्षु समन्विताम् । महा कालेन सार्द्धोर्द्धं मुपविष्ट रतातुराम् । सुख
प्रसन्न वदनाँ स्मेराणन सरोरुहाम् । एवँ सँचिंतयेद्देवीं श्मशाना लय
वासिनीम् । श्रीदक्षिण कालिका येनमः । अथावाहनम् । ओ३म् आत्म
सँस्था मजाँ शुद्धाँ त्वामहँ परमेश्वरी । आरण्य मिव हव्याँशा मूर्त्ती वा
वाहया म्यहम् । श्रीभगवति दक्षिणे कालिके इहागच्छ ॥ पुनः ॥
ॐ देवेशि भक्ति सुलभे परिवार समन्विते । यावत्वचाँ पूजयिष्यामि
तावत्वँ सुस्थिरा भव । तवेयँ महिमा मूर्त्तिस्तस्याँ त्वाँ मदंगाँ च भो
भक्तिस्नेह समा कृष्टा दीपवत्स्थापयाम्यहम् । आसनार्थं पुष्पादिकँ
निवेदयामि । श्रीदक्षिण कालिकायै नमः । इति प्रतिसँचान्ते वक्ष्यमाणम्।

पुनः । ओ३म् अस्मिन् वरासने देवी सुखासीने धरात्मिके । प्रतिष्ठिता भव सातवँ प्रसीद परमेश्वरि । भगवति दक्षिण कालिके इह प्रतिष्ठिता भव ॥ पुनः । ओ३म् अनन्या तव देवेशि मूर्त्ति शक्ति रियँ चने । सा निध्यँ कुरु तस्या त्वँ भक्तानु ग्रह तत्परे । श्रीभगवति इह सन्निधेहि भव । पुनश्च । ओ३म् आज्ञया तव देवेशि कृपाम्भो धेगुणाम्बुधे । आत्मना चैतदस्याँ त्वँ संरुणद्धि महेश्वरि । श्रीदक्षिण कालिके नमः । श्रीभगवति इह सन्निरुध्यस्व । पुनश्च । ओ३म् अज्ञानाद्दुर्मन स्त्वा द्वा वैकल्पा साधकस्य च । मम ऊनँ भवेत्कृत्यँ तदाप्यभि मुखीभव । श्री भगवति इह सम्मुखीभव । पुनरपि । ओ३म् दशापीयूष वर्षिण्या पूर्णे यत्र विष्टरम । सूनावा यत्र सम्पूर्त्तौ स्थिराभव महेश्वरि । श्रीभगवति इह सुस्थिरा भव । अथपुष्पाक्षतैः देवताँगे षडँगन्या सँ कुर्यात् । ओ३म् क्राँ हृदयायनमः । ओ३म् क्रीँ शिरसे स्वाहा । ओ३म् क्रूँ शिखायैवषट् ओ३म् क्रैँ कवचायहुम् । ओ३म् क्रौँ नेत्र त्रयाय वौषट् । ओ३म् क्रः अस्त्रायफट् । ततः । ओ३म् स्वभक्त वाङ् मनश्चक्षु श्रोत्र दूरापि तस्थिन स्वतेज पँचरेणाशु निष्ठिता भव सर्वतः । श्रीदक्षिण कालिके इह सर्वँ

श्वनिक वेष्टिता भव । ततः धेनु मुद्रया ऽमृती कृत्य महा योनि मुद्रिया परमी कृत्य । अँजालिं बध्वा । ॐ यस्या दर्शन मिच्छँति देवाः स्वाभिष्ट सिद्धये । तस्यैते परमेशान्ये आगतँ स्वागतँ चमे ॥ आगता देव देवेशि सुस्वागत मिदँ पुनः । श्रीकालिके त्वेह सुस्वागतम् ॥ अथ श्रीदेव्यघ्यी मृतेन त्रिः प्रोक्षणम् । यथा । ओ३म् आँ ह्रीँ क्रोँ यँ रँ लँ वँ शँ षँ सँ हौँ ॐ क्षँ सँ हँसः ह्रीँ ॐ हँसः श्रीदक्षिण कालि कायाः प्राणा इह प्राणाः पुन अनेनैव मँत्रेण श्रीदेव्याः जीव इहस्थितः । पुनश्च । अनेनैव मँत्रेण श्रीदक्षिण कालिकायाः सर्वेन्द्रियाणि इह स्थितानि । इति । तत अना-मिका गुष्ठ योगेन । प्राण प्रतिष्टा मुद्रया अनेनैव मंत्रेण श्रीभगवत्याः वाङ्मन स्त्वक् चक्षु श्रोत्र जिह्वाघ्राण प्राण पाणि पाद पायू पस्थानि इहैवागत्य सुखँ चिरँ तिष्ठन्तु स्वाहा । ततः महायोनि मुद्रां प्रदर्शयेत् ततः देवींध्यात्वा । मौनी भूत्वा पँचवारँ पुष्पँजलिंदद्यात् । आदौ पादो ततः जानुनी । तृतीयँ नाभौ । चतुर्थं हृदये । पञ्चमं मस्तके । ततः पाद्य पात्र जलम् । ओ३म् यद्भक्ति लेश सम्पर्कात्परमानन्द सम्भव । तस्यैते चरणा ब्जाय पाद्यं शुद्धाय कल्पये । इदं पाद्य श्रीदक्षिण

कालिकायै निवेदयामि अथाचमनीयम् । ॐ मेधाना मपि मेदाय देवानां देवतात्मने । आचमं कल्पयामीशि शुद्धानां शुद्धि हेतवे । इदँ आचमनीयं श्रीदक्षिणा कालिकायै निवेदयामि ॥ अथमधुपर्कम् ॥ ओ३म् सर्व कालुष्य हीनायै परिपूर्ण सुखात्मने । मधुपर्कमिदं देवि कल्पामि प्रसीदमे । इदँमधुपर्कं श्रीदक्षिण० ॥ अथपँचामृतम् ॥ ओ३म पंचामृतं महादिव्यँ नाना गंधं समन्वितम् । कृपया देव देवेशि गृहाणा सुरनन्दिके ॥ इदं पंचामृतँ श्रीदक्षि० ॥ अथार्घ्यम् ॥ ओ३म् तापत्रय हरं दिव्यं परमानन्द लक्षणम् । तापत्रय विनिर्मुक्तँ तवार्घं कल्पया म्यहम्। इदमर्घोदकं श्रीदक्षिण० ॥ अथोद्वर्त्तनम् ॥ ओ३म स्नेहं गृहाणस्ने हेन लोकमातर्महाशये । सर्व लोकेषु शुद्धात्मात् ददामि स्नेह सुत्तमम् । उद्वर्त्तनार्थंमिदं हरिद्रादि चूर्ण तैल युत श्रीदक्षि० ॥ अथस्नानीयजलम् । ओ३म परमानन्द बोधाब्धि निमग्न निज मूर्त्तये । साँगोपांगमिदं स्नानँ कल्पया म्यहं मीश्वरि । इदं स्नानीय जलँ श्रीदक्षिणा० ॥ अथ वस्त्रम् ॥ ओ३म मयाचित्र पठच्छन्न निज गुह्योरुतेजसे । निवारणाय विज्ञाय वासस्ते कल्पयाम्यहम् ॥ इदँ वस्त्रयुग्मँ श्रीदक्षिणा० ॥ अथा-

रीयम् ॥ ओ३म् यामाश्रित्य महादेवो जगत्संहार कारकः । तस्यैते परमेशान्यै कल्पयाम्युत्तरीयकम् ॥ इदमुत्तरीयं श्रीदक्षिण० ॥ अथ भूषणानि ॥ ओ३म् स्वभाव सुंदरां गायै नाना शक्त्या श्रितेशिवे । भूषणानि विचित्राणि कल्पयाम्य मरार्चिते ॥ भूषणाभावे रजतादि द्रव्यं वा श्रीदक्षिणा० ॥ अथ सौभाग्यं द्रव्यं ॥ ओ३म् हरिद्रां कुंकुमंचैव सिंदूरं कज्जलान्वितम् सौभाग्य द्रव्यमादाय गृहाण सुर पूजिते । इदं सौभाग्य द्रव्यं श्रीदक्षिण कालि० ॥ अथगन्धम् ॥ ओ३म् परमानन्द सौभाग्य परिपूर्ण दिगन्तरे गृहाण परमं गंधं कृपया परमेश्वरि । इदं चन्दनादि गन्धं श्रीदक्षिण० । अथाक्षतान् ॥ ओ३म् अक्षतान्वत्सलान् देवि स्वर्णरौप्य मयी कृतान् । गृहाण जगदीशाने प्रसीद परमेश्वरी । ओ३म् सांगायै सपरिवारायै सायुधायै सवल वाहनायै श्रीदक्षिण कालिकायैनमः निवेदयामि ॥ अथपुष्पाणि ॥ ओ३म् तुरीय वनसंभूतं नाना गंध मनोहरम् । आनन्द सौरभं पुष्पं गृह्यतामिद मुत्तमम् । एतानि पुष्पाणि श्रीदक्षि० । अथ पुष्पमाला ॥ ओ३म् मल्लिका व कुल चम्पक पाटलाब्जैः पुन्नाग जाति करवीर लवंगपुष्पैः । यानिर्मिता

च सुरभी युत मल्लिकाभि स्त्वामर्पयामि जगदीश्वरि मे प्रसीद। सौभाग्यार्थं मिमाँ पुष्पमालाँ श्रीदक्षिण० ॥ अथधूपम् ॥ ओ३म् नाना सुगंधि समिश्रँ गन्धाढ्यँ सुमनोहरम्। आघ्रेयं सर्वदेवानां धूपं गृह्ण हर प्रिये। धूपमाघ्रापयामि श्रीदक्षि०। अथदीपम् ॥ ओ३म् सुप्रकाशो महा दीपः सर्वतस्तिमिरापह। सबाह्याभ्यँतरे ज्योतिर्दीपोऽयँ प्रति गृह्यताम् दीपँ दर्शयामि श्रीदक्षिण० ॥ अथनैवेद्यम् ॥ ओ३म् सत्पात्र सिद्धँ सह-विर्विविधानैक भक्षणम्। निवेदयामि देवेशि कृपयात्वँ गृहाण तत्। ओ३म् प्राणाय स्वाहा। ओ३म् अपानाय स्वाहा। ओ३म् समानाय स्वाहा। ओ३म उदानाय स्वाहा। ओ३म् व्यानाय स्वाहा। इति पँच ग्रास मुद्रां दर्शयेत् ॥ मध्येपानीयम् ॥ ओ३म समस्त देवदेवेशि सर्वा वसि करँ परम। अखँडा नन्द सँपूर्णा गृहाण जल मुत्तमम् ॥ अखँड तृप्त्यर्थमिदँ जलँ श्रीदक्षिण० ॥ पुनर्जलम् ॥ ओ३म सुगन्धि मिश्रितँ वारि गृहाण सुर पूजिते। करानन विशुद्ध्यर्थं पुनस्तोयँ ददामि ते। करोद्वर्तनार्थं मुख प्रक्षालनार्थंच चन्दन मिश्रित जलँ श्रीदक्षिणका० ॥ अथ ताम्बूलम् ॥ ओ३म एलाल वंग कर्पूर नागवाल्लिदलैर्युतम। पूगभागे

न्थाँ श्रीपादुकां पूजयामि तर्पयामिनमः। ओ३म महादेवानन्द नाथेह गच्छेहतिष्ठ महादेवानन्द नाथे श्रीपादुकां०। ओ३म त्रिपुरानन्द नाथे-हागच्छेहतिष्ठ त्रिपुरानन्द नाथे श्रीपादुकाँ०। ओ३म भैरवानन्द नाथे हाग०। भैरवानन्द नाथँ श्रीपा०॥ ततः सिद्धान्पूजयेत्॥ ओ३म ब्रह्मानन्द नाथे हाग०। ब्रह्मानन्द नाथँ श्रीपादुकाँ०। ओ३म पूर्णदेवा-नन्द नाथेहाग०। पूर्णदेवानन्द नाथँ श्रीपादु०। ओ३म चलचित्तानन्द नाथेहाग०। चलच्चित्तानन्द नाथं श्रीपादु०। ओ३म कुमारानन्द नाथे-हाग०। कुमारानन्द नाथँ श्रीपादु०। ओ३म चला चला नन्द नाथे हाग०। चला चला नन्द नाथँ श्रीपादु०। ओ३म क्रोधानन्द नाथेहाग०। क्रोधानन्द नाथँ श्रीपादु०। ओ३म वरदानन्द नाथेहाग०। वरदानन्द नाथँ श्रीपादु०। ओ३म स्मरदीपानन्द नाथेहाग०। स्मरदीपानन्द नाथँ श्रीपादु०। ओ३म मायाम्बा इहाग०। मायाम्बां श्रीपादु०। ओ३म मायावस्यम्बा इहाग०। मायावस्यम्बाँ श्रीपादुकाँ०। पाद्या-दिभि र्नैवेद्यान्तैः पूजयेत् श्रीदक्षिण कालिकायैनमः॥ अथ मानवौघा-न्पूजयेत् ओ३म् विमलानन्द नाथेहाग० विमलानन्द नाथँ श्रीपादु०।

ॐ कुशलानन्द नाथे ह्राग० कुशलानन्द नाथँ श्रीपादुकाँ ॥ ॐ श्रीमत्सेला नन्द नाथे ह्राग० । श्रीमत्सेला नन्द नाथँ श्रीपादुका० । ॐ सुधाकरानन्द नाथेह्राग० सुधाकरानन्द नाथं श्रीपा० ॐ प्रह्लादानन्द नाथेह्राग० प्रह्लादानन्द नाथं श्रीपादु० । ॐ सनकानन्द नाथेह्राग० सनकानन्द नाथं श्रीपादु० । ॐ वशिष्ठा नन्द नाथेह्राग० वशिष्ठानन्द नाथं श्रीपा० । ॐ बोधानन्द नाथेह्राग० बोधानन्द नाथं श्रीपा० । ॐ मीनानन्द नाथेह्राग० मीनानन्द नाथँ श्रीपा० । ॐ गोरक्षकानन्द नाथेह्राग० गोरक्षकानन्द नाथं श्रीपा० । ॐ भोजदेवानन्द नाथेह्राग० भोजदेवानन्द नाथं श्रीपा० । ॐ प्रजापत्यानन्द नाथेह्राग० प्रजापत्यानन्द नाथँ श्रीपा० । ॐ मूलदेवा नन्द नाथेह्राग० मूलदेवानन्द नाथं श्रीपा० । ॐ रन्तिदेवानन्द नाथे ह्राग० रन्तिदेवानन्द नाथं श्रीपादु० । ॐ विघ्नेश्वरा नन्द नाथेह्राग० विघ्नेश्वरानन्द नाथँ श्रीपा० । ॐ हुताशनानन्द नाथेह्राग० हुताशनानन्द नाथँ श्रीपादु० ॐ समयानन्द नाथेह्राग० समयानन्द नाथँ श्रीपा० ॐ संतोषानन्द नाथेह्राग० संतोषानन्द नाथँ श्रीपादुकाँ पूजया० । ततो निज गुरूँ ध्यात्वा ॥ पाद्यादिभिर्नैवेद्यान्तैँ सम्पूज्य । पाद्या दीनि समर्प-

यामि श्री दक्षिण कालिकायैनमः इति ॥ अर्घामृतेन ॥ अभीष्ट सिद्धिं मे देहि शरणागत पालिके । भक्त्यासमर्पये तुभ्यं इदमा वरणार्चनम् ॥ इदमा वरणार्चनं श्रीदेव्याः सामग्रस्तेऽस्मर्पयामिनमः ॥ ततरश्मि पुञ्ज देवान्स्मरेत् । पुष्पाञ्जलिं बध्वा ॥ ॐ नर्वा श्यामा असिकरा मुण्डमाला विभूषिताः । तर्जनीं वामहस्तेन धारयन्त्य शुचिस्मिताः इतिध्यात्वा । ततस्तर्पयेत् । बाह्य त्रिकोण सम्मुखे । ॐ कालीहाग० कालीं श्रीपादुकां पूज० वामे-ॐ कपालिनी हाग० कपालिनीं श्रीपा० । ॐ कुल्ल इहाग० । कुल्लाँ श्रीपा० । तदंतस्त्रिकोणे सम्मुखे ॐ कुरु कुल्ल इहाग० कुरुकुल्लां श्रीपा० । वामे-ॐ विरोधिनी हाग० विरोधिनीं श्रीपा० । दक्षे-ॐ विप्रचित्त इहाग० विप्रचित्तां श्रीपादुकां० । तदन्तस्त्रिकोणे सम्मुखे-ॐ उग्र इहाग० उग्राँ श्रीपा० । वामे-ॐ उग्रप्रभ इहाग० । उग्रप्रभाँ श्रीपादु० दक्षे-ॐ दीप्त इहाग० । दीप्ताँ श्रीपा० । तदंतस्त्रिकोणे सम्मुखे-ॐ मात्र इहाग० मात्राँ श्रीपा० । वामे-मुद्र इहाग० मुद्राँ श्रीपा० । दक्षे ॐ मित्र इहाग० मित्राँ श्रीपा० । तदंतस्त्रिकोणे सम्मुखे-ॐ नील इहाग० नीलाँ श्रीपा० । वामे-ॐ घन इहाग० घनाँ श्रीपादु० । दक्षे-ॐ बलाक

इहाग० बलाकाँ श्रीपादु० ॥ ततो देव्याः दक्षिणे—ॐ ह्रीं श्रीं हूँ ह्रीं महाकालाय ह्रीं महादेवाय क्रीं कालिकायै ह्रीं इति मंत्रेण महा कालँ पूजयेत् ॥ पाद्यादिभिर्नैवेद्यान्तौं पूर्ववत्सम्पूज्य ॥ ध्यानम् ॥ ॐ अंजना द्रिनिभँदेवँ पिंगकेशँ द्विबाहुकम् । आशाम्बरँ सर्प भूषा भूषितँ प्रणमा-मितम् । इति महा कालँ ध्यात्वा । पुनः पाद्यादिना सम्पूज्य । अर्घ्या-मृतेन । ॐ अभीष्ट सिद्धिम्मे देहि शरणागत पालिके । भक्त्या समर्पये तुभ्य० इदम् आवरणार्चनँ श्रीदक्षिण कालिकायाः वाम हस्ते समर्पि० ॥ ततोऽष्ट शक्ती रष्टदले पूजयेत् ॥ पूर्वे--आँ ब्रह्माणीहाग० ॐ ब्रह्माणीं श्रीपा० । अग्निकोणे--ई नारायणी हाग० ॐ नारायणीं श्रीपा० । दक्षिणे ॐ माहेश्वरी हाग० ॐ माहेश्वरीं श्रीपा० । नैर्ऋत्ये--ॠं चामुंड इहाग० ॐ चामुंडाँ श्रीपा० । पश्चिमे--लृं कौमारी हाग० ॐ कौमारीं श्रीपा० । वायव्ये--ऐं अपराजित इहाग० । ॐ अपराजिताँ श्रीपा० । उत्तरे--औं वाराहीहाग० । ॐ वाराहीं श्रीपादु० । ईशाने--अः नारसिंहीहाग० ॐ नारसिंहीं श्रीपा० अथ ध्यायेत् ॥ ॐ दंडं कमंडलुं पश्चात्साक्ष सूत्रँ महाभयँ । बिभ्रती कनक च्छायां ब्राह्मी कृष्णा जिन उज्वलां ॥ ॐ चक्रं

घंटा कपालं च शंखं च दधती करैः। बन्धूक पुष्प संकाशा वैष्णवी काम दायिनी ॥ ॐ शूलं परश्वधं क्षुद्र दुंदुभी नृकरोटिकाम्। वहन्तीहिम सँकाशा ईश्वरी कामदायिनी ॥ ॐ अंकुशँ दण्ड खड्वां गंपाशंच दधती करैः। बन्धूक पुष्प संकाशा कुमारी काम दायिनी ॥ ॐ मुशलँ करवालं च खेटकं दधती हलम्। करैश्चतुर्भिर्वाराही ध्येया काल घनच्छविः ॥ ॐ अंकुशँतोमरं विद्युत् कुलिशँ बिभ्रती करैः। इंद्र नील निभेन्द्राणी ध्येया सर्व समृद्धि दा ॥ ॐ शूलँ कृपाणँ नृशिरः कपालं दधती करैः। मुण्डस्त्रक् मंडिता ध्येया चामुण्ड रक्त विग्रहा ॥ ॐ अक्षस्त्रजँ बीजपूरँ कपालं दधती करैः। [illegible] मोह रक्षनी समीरिता ॥ इतिध्यात्वा ॥ पाद्यं [illegible] समर्पयामि श्रीदक्षिण कालिकायैनमः इति सम्पूज्य ॥ ततोऽर्घामृतेन ॥ ॐ अभीष्ट सिद्धिमे देहि शरणा० । इद मावरणार्चनँ श्रीदक्षिण कालिकायाः वामहस्तेसम० ॥ ततो यँत्र बाह्ये इन्द्रादीनन्पूजयेत् ॥ आदौध्यायेत् ॥ ॐ ऐरावत समारूढ़मिन्द्रँत्रिदश पूजितम्। शचीपतिं वज्रपाणिं वस्त्र हस्तँ महाबलम् ॥ ॐ शक्तिहस्तँ रक्त वर्णं त्रिनेत्रं मेषवाहनम्। तोमरँ व्यँजनँ गव्य पात्रँ बिभ्रा मग्निकम् ॥

ॐ दण्डपाशधरँ श्यामँ धर्मराजँ महाद्युतिम् । महाम्हिं समा रूढँ शमनँ कालि रूपिणम् ॥ ॐ निर्ऋतिं श्याम वर्णं च सायुधं प्रेत वाहनम्। राक्षसाधिपतिं देवं खड्ग हस्तं महाबलँ ॥ ॐ वरुणँ पाशहस्तँ च महा मकर वाहनम् । सागराधि पतिं शुद्ध वर्णं त्रिभुवनेश्वरम् ॥ ॐ मृगारूढँ नील वर्णं वायुमँकुश धारिणम् । धावद्धाराणि पृष्ठस्थं त्रैलोक्यांतर चारिणम् ॥ ॐ गदाहस्तँ श्याम वर्णं कुबेरँ मत्स्यवाहनम् । धनदँ यक्षक सर्वं नानालंकार भूषितम् ॥ ॐ त्रिनेत्रं गौर वर्णं च ईशानं वृषवाहनम् शूलहस्तं महादेवं चन्द्रमौलिं जटाधरम् ॥ ॐ हँसारूढँ चतुर्वक्त्रँ ब्रह्माणँ कमलासनम् । अक्षमालाँ स्त्रुवँ पुस्तँ धारयंतम् कमंडलुम् ॥ ॐ शंख चक्र गदा पद्म धारिणम् दैत्य सूदनम् । नानालंकार संयुक्तँ श्यामँ गरुड वाहनम् । श्रीदिक पालेभ्योनमः ॥ इतिध्यात्वा ॥ मधुपर्केण तर्पयेत् । यथा पूर्वादितो वामावर्त्तेन । ॐ लइंद्र इहाग० इन्द्रं श्रीपादु० ओ३म् रं वह्निहाग० वह्निं श्रीपा० । ओ३म् यँ यमेहाग० यमँ श्रीपादु० ओ३म् क्षं निर्ऋति इहाग० निर्ऋतिं श्रीपा० । ओ३म् बं वरुणे हाग० वरुणं श्रीपा० ओ३म् यं वायवी हाग० वायुं श्रीपा० । ओ३म् ईं कुबेरे हाग० को॰

श्रीपा० । ओ३म् ह्रौं ईशाने इहाग० ईशानं श्रीपादु० । ओ३म ह्रौं ब्रह्मे
ह्याग० ब्रह्माणम श्रीपा० । ओ३म विष्णु इहाग० विष्णुँ श्रीपा० पाद्या
दीनि समर्पयामि । दिगपालेभ्योनमः । इतिसम्पूज्य । अर्घ्यामृतेन ॥ ॐ
अभीष्ट सिद्धिम्मे देहि शरणा० इदम्मावरणार्चनम श्रीदक्षिण कालि० ॥
ततस्तस्यस्थले ऽस्त्राणि च पूजयेत् ॥ ओ३म वे वज्रेहाग० वज्रँ श्रीपा० ।
ओ३म शं शक्ति इहाग० शक्तिं श्रीपा० । ओ३म दं दण्डेहाग० दण्डम
श्रीपा० । ओ३म खं खड्गेहाग० खँगं श्रीपा० । ओ३म पं पाशेहाग० पाशं
श्रीपादु० । ओ३म अँ अँकुशे हाग० अँकुशम श्रीपा० । ओ३म गं गदे
हाग० गदां श्रीपा० ओ३म शं शूलेहाग० शूलं श्रीपा० । ओ३म पं पद्मे
हाग० पद्मम श्रीपा० ओ३म च चक्रेहाग० चक्रम् श्रीपादु० ॥ पाद्यादिभि
सम्पूज्य ॥ अर्घ्यामृतेन ॥ ओ३म अभीष्ट सि० । इदम्मा वरणार्चनम श्री
देव्याः वामहस्ते समर्पयामि ॥ ततो यन्त्राग्रे भैरवाम्पूजयेत् ॥ आदौ
ध्यानम ॥ ओ३म श्रीपजरय त्रिनयनमर्द्धं चंद्र विभूषितम । स्फटकाभ
कंकणादि भूषा जाल समायुतम । अष्ट वर्ष वयस्कं च कुंतलोल्लसितम
सजे । धारयन्तम दण्ड शूले भैरवादि समायुतम इतिध्यात्वा ॥ ततस्त-

पयेत् ॥ ॐ ऐं ह्रीं अं असितांग भैरवे ह्राग० असितांग भैरवं श्रीपा० । ॐ ऐं ह्रीं इँ रुरुभैरवे ह्राग० रुरु भैरवँ श्रीपा० । ॐ ऐं ह्रीं उँ चण्डभैरवे ह्राग० चण्डभैरवं श्रीपा० । ॐ ऐं ह्रीं ऋँ क्रोध भैरवे ह्राग० क्रोध भैरवँ श्रीपादुका० ॐ ऐं ह्रीं लृँ उन्मत्त भैरवे ह्राग० उन्मत्त भैरवँ श्रीपादु० । ॐ ऐं ह्रीं एँ कपाली भैरवे ह्राग० कपाली भैरवँ श्रीपादु० । ॐ ऐं ह्रीं ओं भीषण भैरवे ह्राग० भीषण भैरवँ श्रीपादु० । ॐ ऐं ह्रीं अं संहार भैरवे ह्राग० संहार भैरवं श्रीपा० ॥ पाद्यादिभिः सम्पूज्य ॥ ततो वामावर्त्ते नाष्ट भैरवीः पूजयेत् ॥ ध्यानम्—ॐ भावयेच्च महादेवीं चन्द्रकोटि सुतप्रभाम् । हिम कुन्देन्दु धवलां पंच वक्त्रां त्रिलोचनाम् ॥ अष्टादश भुजैर्युक्तां सर्वानन्द करोद्यताम् । प्रहसन्तीं विशालाक्षीं देवदेवस्य सम्मुखीम् ॥ इति ध्यात्वा ॥ तर्पयेत् ॥ ॐ श्री भैरवी ह्राग० श्री भैरवीं श्रीपादु० । ॐ महाभैरवी ह्राग० महाभैरवीं श्रीपा० । ॐ सिंह भैरवी ह्राग० सिंह भैरवीं श्रीपा० । ॐ धूम्र भैरवी ह्राग० धूम्र भैरवीं श्रीपा० । ॐ भीम भैरवी ह्राग० भीम भैरवीं श्रीपा० । ॐ उन्मत्त भैरवी ह्राग० उन्मत्त भैरवीं श्रीपा० । ॐ वशीकरण भैरवी ह्राग० वशीकरण भैरवीं श्रीपा० ।

ॐ मोहन भैरवी हाग० मोहन भैरवीं श्रीपा० । पाद्यादिभिः सम्पूज्य ॥ अर्घ्यामृतेन ॥ ॐ अभीष्ट सिद्धिंमे देहि० इदमावरणार्चनम् श्रीदेव्याः वामहस्ते समर्पयामि ॥ ततः देव्याः दक्षिणहस्ते ॥ ॐ खँ खड्गे हाग० खड्गं श्रीपा० । तदधः । ॐ मँ मुण्डे हाग० मुण्डं श्रीपा० दक्षोर्ध्वे । ॐ अँ अभये हाग० अभयं श्रीपा० । तदधः । ॐ वँ वरे हाग० वरं श्रीपा० ॥ पुनः पाद्यादिभिः सम्पूज्य ॥ अर्घ्यामृतेन ॥ ॐ अभीष्ट सिद्धिंमे देहि शरणागत पालिके । भक्त्या समर्पये तुभ्यमिदमावरणार्चनम् । इदमावरणार्चनम् श्रीदक्षिण कालिकायाः वामहस्ते समर्पयामि ॥ ततः योनिं भूत्वा ध्यान पूर्वकँ पुष्पांजलि त्रयं देव्या पादयोर्दत्वा ॥ ततः पूर्वोक्त षडंगन्यासं कुर्यात् ॥ तद्यथा ॥ ॐ क्रां हृदयायनमः । ॐ क्रीं शिरसे स्वाहा । ॐ क्रूँ शिखायैवषट् । ॐ क्रैं कवचायहुम् । ॐ क्रौं नेत्रत्रयाय वौषट् ॐ क्रः अस्त्रायफट् ॥ ततः ध्यानावस्थितेन ॥ ॐ क्रीं श्री दक्षिण-कालीं देवीं तर्पयामिनमः । इतिदशधातर्पयेत ॥ ततः पाद्यार्घ्याचमन पुष्प धूप दीप नैवेद्यादिना देवीं सम्पूज्य । पूजान्ते चामरं वीजयेत् । कर्पूरादिभिश्च नीराजनँ च कुर्यात् ॥ ततः पुष्पांजलिं गृहीत्वा । ॐ खड्गांचक्र

गदेषु० ॥ १ ॥ ॐ अक्षस्त्रक् परशुं० ॥ २ ॥ ॐ घंटाशूल हलानि शंखं० ॥ इति त्रीन्पुष्पाँजलीन्निवेदयेत् ॥ नाऽँन्त नमस्कुर्य्य ॥ श्रीदेव्यः स्तुत्वा मूल मन्त्रोत्तर शतंजपेत् । ॐ क्रीं श्रीदक्षिण कालिकायैनमः इति वा यथाशक्त्या॥ प्रदक्षिणां कुर्यात् ॥ ॐ पदे पदेया परिपूजकेभ्यः सद्योऽश्वमेघ दि ॐ ददाति । तां सर्व पापक्षयहेतु भूता प्रदक्षिणांते परितः करोमि ॥ ॐ रक्तोत्पला रक्तलता प्रभाभ्यां ध्वजोर्ध्व रेखा कुलिशांकिताभ्याम् । अशेष वृन्दारकवंदिताभ्यां नमो भवानि पद पंकजाभ्यां । श्रीसर्वेष्ट देवताये नमः ॥ अथ क्षमापनम् ॥ ॐ आवाहनं न जानामि न जानामि समर्च-नम् । पूजाक्रियां न जानामि क्षमस्व जगदीश्वरि । अन्यथा शरणं नैः त्वमेव शरणं मम । तस्मात्कारुण्य भावेन प्रसीद परमेश्वरि ॥ गतं पापं गतं दुःखं गतं दारिद्रमेवच। आगताः सुख सम्पत्तिः पुण्याच्च तव दर्शनात् । ॐ मंत्र हीनं क्रिया हीनं भक्ति हीनं सुरेश्वरि । यत्पूजितं मयादेवि परिपूर्णं तदस्तु मे ॥ यदक्षर पद भ्रष्टं मात्रा हीनं चयद्भवेत् । तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ॥ श्रीभगवत्यैनमः ॥ ततोऽर्घेण मर्घोदकेन ॥ ॐ अनेना वाहनासन पाद्य र्घ्याचमनीय स्नान वस्त्रादि-

वस्त्र गन्धाक्षत पुष्प धूप दीप नैवेद्य ताम्बूल दक्षिणा प्रदक्षिणादि मंत्र पुष्परूपैः षोडशोपचारैः यथा ज्ञानेन आवरणादि पूजनाख्य कर्मणा कृतेन श्रीआद्या शक्तिः प्रीयतां न मम ॥ इति श्री नागपुर मंडलान्तरगतवर्ति श्रीकेदारनाथ रानिग्राम अन्ना ज्योतिर्विद् पँ० नागेराम शर्मात्मज ज्योतिषि धोमानन्द शर्मसुत पण्डित जयानन्द शर्मसुत उपाध्याय पँ० कुलानन्द शर्म जमलोगी ( कान्यकुब्ज ) सँगृहीता हरि-हर शिवाराधनान्तर्गत देवी पूजा समाप्ता ॥ शुभिद्धि भूयात् ॥

# अथ पूजान्ते बलिदान क्रमश्च लिख्यते॥

तद्यथा ॥ स्ववामभागे चतुरस्त्र मण्डलँ विधाय ॥ तत्राधारं संस्थाप्य । मांस माषान्न पक्वान्नादि द्रव्यं निदध्यात् । फट् इति जलेन सम्प्रोक्ष्य । नम इत्यभ्यर्च्य वं इति बीजं द्वादश वारं जपेत् । धेनु मुद्रयाऽमृतीकृत्य । हूँ इत्यवगुण्ठ्य । योनिधेनु मुद्रे दर्शयित्वा मत्स्य मुद्रांच प्रदर्श्य । ॐ क्रीं आदि क्षिण कालिकायै स्वाहा । एषबलिर्नमः । इति जलमुत्सृजेत् । नैऋत्यां दिशिधारयेत् ॥ एष नित्यबलिदानक्रमः ॥

अथ रात्रौ काम्यबलिर्देशः ॥ पूर्ववन्मण्डलाँ छिविधिंकृत्वा । सम्पूज्यच ।
ततः पात्रो परि ।धाविध बलि द्रव्यं संस्थाप्य । सम्पूज्य । ॐ श्रीमत्पे
दक्षिण कालिकायैनमः । इति नमस्कृत्य । धेनु योनि तत्व मुद्राश्च
दर्शयेत् ॥ अथमंत्रः ॥ ॐ पद्मे पद्मे महापद्मे महापद्माधि पद्मये
मये पनतामिमँ बलिं गृह्ण २ गृह्णापय २ मम सर्व शान्ति कुरुकुरु
पराविद्यां चाकृष्य कृष्य छिन्धि छिन्धि ह्रूं स्वाहा इति तत्व मुद्रया
मळ मुत्सृजेत् । ॐ ऊर्ध्वं ब्रह्माण्डतोवा दिविगत गुलले भूतले निष्क-
लेवा पाताले वानलेवा सलिल पवनयोर्यत्र कुत्र स्थितावा । क्षेत्रपीठो
पपीठादिषु कृत सुपदा पुष्प धूपादिकेन प्रीताः देव्यः सदाता शुभ
बलि विधिमापान्तु देवेन्द्र तुल्या ॥ श्रीदक्षिण कालिकायैनमः ॥
चतुष्पथादिस्थाने धारयेत् ॥ इति ॥

**॥ अथ नित्यकर्माभ्यापाखण्डलिकाविधिःप्रारम्भः ॥**

दधितंदुल माषान्नँ मुद्गान्नँ राजमाषकाः । युक्तापंच बलिंदद्यात्
श्मशाने सर्वसाधने ॥ महोत्पाते विग्रहेच सँग्रामे शत्रु सँकटे । मारणे
च्चाटने घोरे वश्याकर्षण मोहने यत्नेन विधिवत्पूज्य इन्द्रादिकूपाल

पूर्वतः । कृत्वा सँध्यो पासनँचै स्वात्म शुद्धिं ततः परम् । दिग्दिवाँ
बलिमा दाय पश्चान्मंत्र जपेत्सुधिः । होमः कुर्यात् ततः प्राज्ञो आमान्नँ
दक्षिणा युतम् । सँपूर्ण सर्वमाप्नोति सत्यँ सत्यँ न सँशयः ॥ ततः
सामान्यँ विशेष.द्यँ च संस्थाप्य । विन्दुत्रिकोण वृत चतुरस्र मण्डलँ
सम्प्रोक्ष्य । सम्पूज्य । पूर्वादिशि ॐ लँ इन्द्रायनमः । इति दधि तंडुलादि
माषान्नँ मण्डले निधाय । दीपँप्रज्वाल्य बलिद्रव्यँ पाद्यादिभिःसम्पूज्य
पाद्यँसमर्पयामि लँ इन्द्रायनमः । इन्द्रप्रीतिकारक बलिद्रव्यायनमः इति
गन्धाक्षत धूपदीपेन च सम्पूज्य । जलँ गृहीत्वा । ॐ लाँ लीं लूँ लैं लौँ
लः भोइन्द्र दिशँरक्ष इमँ माषान्न बलिं भक्ष मम कार्यं सागम
साधय सर्व विघ्नान्नाशय २ सर्वान् शत्रुन बलिंगृहण २ समशान्ति
कुरु कुरु स्वाहा ॥ इत्यनामिकाँ गुष्ठ योगेन जल मुत्सृजेत् ॥ ॐ तीक्ष्ण
दँष्ट महाकाय कल्पाँत दहनोपम । भैरवायेतिप्रणमेत् । इति सर्वत्र ।
ततः आग्नये । ॐ रँ अग्नयेनम इति बलिद्रव्यँ । पूर्ववत् मण्डलँ निर्माण
तस्मिन्निधाय दीपँ प्रज्वाल्य पाद्यादिभिः सम्पूज्य । रँ अग्नयेनमः ।
अग्नि प्रीति कारक बलयेनम इति । ॐ राँ रीं रूँ रैं रौं रः भो आग्ने-

कृत्वा ॥ तत्र बलिद्रव्यँ संस्थाप्य । दीपँ प्रज्ज्वाल्य पूर्ववत्सम्पूज्य । ॐ सां सीं सूँ सैं सौं सः भो सोमाः दिशँरक्ष इमँ सदीप माषान्न ब० पूर्ववदु-च्चार्य्य । तर्जं यँ गुष्ठ योगेन जलँ त्यजेत् । ॐ तीक्ष्णदँष्ट्रेति प्रणमेत् । ॐ सर्वेभ्योनमः ॥ ततः उदीच्याम्-ॐ कुँ कुबेरायनमः, इति मण्डलँ कृत्वा बलिद्रव्यँ संस्थाप्य पूर्ववत्सम्पूज्य । ॐ कां कीं कूँ कैं कौं कः भो कुबेरादिशँ रक्षेमँ सदीप माषान्नब० पूर्ववदुच्चार्य्य । मध्यमाँ गुष्ठ यो-गेन जलमुत्सृजेत । तीक्ष्णदँष्ट्रेति नमस्कृत्य । ॐ कुबेरायनमः ॥ ईशाने-ॐ रँ रुद्रायनमः इति पूर्वोक्त विधिना मण्डलँ कृत्वा । तत्र बलि द्रव्यँ च सँस्थाप्य पूर्ववत्सम्पूज्य । ॐ रां रीं रूँ रैं रौं रः भो रुद्रादिशँ रक्षेमँ सदीप माषान्नब० पूर्ववदुक्त्वा । ततः मुद्रया जलँ त्यजेत् ॐ तीक्ष्ण दँष्ट्रेति प्रणमेत् । ॐ रुद्रायनमः ॥ ऊर्ध्वे-ॐ ब्राँ ब्रह्मणेनमः पूर्वोक्त वि-धानेन मण्डलँ विरच्य बलिँ सँस्थाप्य । सम्पूज्य । ॐ ब्राँ ब्रीं ब्रूँ ब्रैं ब्रौं ब्रः भो ब्रह्मन् दिशँ रक्षेमँ सदीप माषान्नब० । पूर्ववदुच्चार्य्य । सर्वाँ गुष्ठ योगेन जलँ त्यजेत् । ॐ तीक्ष्णदँष्ट्रेति प्रणमेत् । ॐ ब्रह्मणेनमः ॥ ततोऽधः । ॐ क्लँ कूर्मायनमः । इति मण्डलँ द्रव्यँ च सँस्थाप्य । दीपँ

प्रक्षाल्य पूर्ववत्प्रपूज्य । ॐ क्लीं क्ला क्लूँ क्लैं क्लौं क्लः श्रीकूर्मंदिश रक्षेमं सदीपमाषान्नब० पूर्ववदुक्त्वा । कूर्म मुद्रया जलमुत्सृजेत् । ॐ तीक्ष्णदंष्ट्रेति प्रणमेत् । ॐ कूर्मायनमः ॥ १इति माषान्नबलि विधिः



समाप्ता ॥ ततः हस्तौ पादौ प्रक्षाल्य । शुद्धाम्बुनात्रिराचमेत् ॥ ओरेम् शान्तिः ३ ॥ इति ॥

१ कालिका पुराणे— "कुष्माण्डमिक्षु दण्ड च मांस सार समेवच । एतेबलि समाः प्रोक्तास्तृप्तौ छाग समाः सदा" । रुद्रयामलेपि । "छागाभावेतु कुष्माण्डं श्री फलं वा मनोहरम् । वस्त्र संवेष्टितं कृत्वा छेदयेच्छुरिकादिना" । ब्राह्मणो न सदादेय कुष्माण्डं बलिकर्मणि । श्रीफलं वा सुराधीश छेदं नैवतु कारयेत् ॥ माषान्नेन बलिर्देयो ब्राह्मणेन विजानता ॥ इति ॥

॥ अथ महिषबलिः छागबलिः मेषबलिः प्रयोगः प्रारम्भः ॥

श्रीगणेशायनमः ॥ स्वयँ उत्तराभिमुखः पूर्वाभिमुखं बलिं वा, स्वयं पूर्वाभिमुखः । उत्तराभिमुखँबलिं । अव्यग्रा वयवँ सुंदरं हृष्टं पुष्टँ पशुमानीय । मारघँ । कण्ठे वेष्टयित्वा । कृतांजलिः पठेत् । जलपात्रेतीर्थानावाहनम् । ॐ वाराही यमुना गंगा करतोया सरस्वती । कावेरी चन्द्र भागा च सिन्धु भैरव सागराः पशु स्नानविधानाय सान्निध्यमिह

कल्पय । इति तीर्थानावाह्याचम्य । आत्मशुद्धिं च कृत्वा । ततस्तेन जलेन पशु सं प्रोक्षणम् । ॐ अग्निः पशु रासीत्तेनायजँत सएँतल्लोक मजयद्यस्मिन् । अग्निः सतेलोको भविष्याति तंजेष्यसि पिबैता अपः ॥ ॐवायुः पशुरासीत्तेनायजँत सएँतं ल्लोक मजयद्यास्मिन्वायुः सतेलोको भविष्यति तंजेष्यसि पिबैता अपः । ओ३म् सूर्यः पशुरासीत्तेनाय जँत स एतं ल्लोक मजयद्यास्मिन्सूर्य सतेलोको भविष्यति त.जेष्यसि.िबैता अपः । ॐ वाचँते शुंधामि । ॐ प्राणातँ शुन्धामि । ॐ चक्षुस्ते शुंधामि ॐश्रोत्रंते शुन्धामि । ओ३म मेढ्ंते शुन्धामि ॐ पायूंनेशुन्धा.ि। ॐ चरित्रांस्ते शुन्धामि । ॐ नाइयंते शुन्धामि । ॐ रोमाणिते शुन्धामि ॐ त्वचन्ते शुन्धामि ॥ ॐ मनस्ताप्यायताम् । ॐ वाक्त आप्य यताम् ॐ प्राणास्त आप्यायताम् । ॐ चक्षुस्त आप्यायताम् । ॐ श्रोत्रँत आ प्यायताम् । ॐ मेढ्ंन आप्यायताम् । ॐ पायूँत आप्य:यताम् । ॐ चरित्राँस्त आप्यायताम् । ॐ नाइयन्त ५ाप्यायताम । ॐ रोमाणित आप्यायताम । ॐ त्वचँत आप्यायताम् । ॐ यन्नेकँ यदस्ति तत्त आप्ययायताम । निष्टयायताम । तत्ते शुद्धयातु शोस्त्हो

ऽयः स्वाहा । इति मंत्रैः स्नापयित्वा ॥ ततस्तंभे पशुं बध्नीयात् ॥ ॐ

मेघा कारस्तंभमध्येपंशु बंधाय स शृंगाख्य नयथे पशुं बन्धय । बंधन

ब्रह्मांड स्वरूपस्तंभे पशुं बन्धय बंधय हुः फट्स्वाहा । पुनः प्रोक्षणाम ॥

ॐ ह्रां ह्रीं ह्रूं च्याँ चण्डिकायै इमं पशुं प्रोक्षयामि स्वाहेति समोक्ष्य ॥

ततस्तंभ प्रार्थना ॥ ॐ स्तंभत्वं शिवरूपोसि ब्रह्मणा निर्मितः पुरा ।

देव्याः स्तुति प्रसादेन सदात्व मचलोभव ॥ स्तंभमूले स्थितो ब्रह्मा

स्तंभ मध्येच केशवः स्तंभाग्रेच त्रयं रुद्र स्तस्मात्च मंगलोभव ॥ यथा

ऽचलो गिरिर्मेरु हिमवांश्च यथाऽचलः । यथाऽचलान्य नागाश्च तथा

त्वं मचलोभव ॥ सर्वदेवाश्च गन्धर्वा यक्षाराक्षस पन्नगाः । स्वच स्ता नि

ध्य मायान्तु तस्म त्त्वम चलोभव ॥ इति संप्रार्थ्य पाद्यादिभिः स्तंभं

सम्पूज्य । पाशमंत्रंपठेत् ॥ ॐ पाशत्वं वरुणाज्जातः सदावरुणदैवतः

अतस्त्वां पूजयिष्यामि तस्मा च्छान्ति प्रयच्छमे । इति मंत्रेण पाशम्

सम्पूजयेत् ॥ ततः पाद्यादिभिर्माहिषादि बलिं सम्पूज्य ॥ पुनः महिषा-

दिबलिं ग्रीवायां पट्टसूत्रा बलिं हरिद्राक्त वस्त्रं विन्यस्य । ततः कर्णेपठेत

ओ३म् महिषासुर नामासि ह्यसुरो काम रूपधृक् । चित्रन्तेतनु सम्पूज्य

युद्धतत्वम् सुदारुणम् ॥ अतस्ते बलि दानेन प्रीता भवतु चण्डिका। इमम् रूपम् परित्यज्य गन्धर्वं त्वमवाप्नुहि ॥ इति पठित्वा ॥ ततो ललाटे सिन्दूरम् रक्त पुष्प मालां कण्ठे श्रृंगयोः वेष्टयित्वा, अंगानिस्पृशेत् यथा ॥ ओ३म् ललाटे च शिवो देवो श्रृंगयोः पार्वती शिवौ । रुद्राणि पति दासित्वम् दश वर्षाणि पंचच । पशु जन्म प्रसन्नोसि पलित्वम् चण्डिकाप्रियः । तुष्टा भवतु सादेवी सरक्त पिशितैस्तव ॥ इतिकर्णेपठेत् ॥ पुनः प्रोक्षणम् ॥ ॐ आपोहिष्ठा मयो भुवेति प्रोक्षणम् कुर्यात् । ॐ शिरः पुनातु गोविन्दः कण्ठे विष्णुः पुनातुते । पृष्ठम् पुनातु वैकुण्ठः जठरन्तु सुत.शनः । एवम् समस्त गात्रेषु वहुरूपी पुनातुत्वः । इति सम्प्रोक्ष्य ॥ ततस्तस्मात् पाशाच्च पशु मोचनम् ॥ ॐ ऐं ह्रीं श्रीं चण्ड मुण्डाधिष्टितविग्रहाये .गुरूप चाण्डिकाये इमंपशु मोचयामि स्वाहा । इतिमोचयित्वा । पुनः कर्णेजपेत् । ॐ पशु पाशाय विद्महे शिरः छेद्याय धीमहि तन्नः पशु प्रवोदयात् । ओ३म् हिलि २ वहुरूप चाण्डिकाये हूँ हूँ प्रशंसाय स्वर्गं नियो जय नियोजयेत ॥ पुनः प्रोक्षणम् ॥ ॐ हां हीं हूँ हैं हैं हः ओँ श्रीं ओँ श्रें ओँ श्रः निखिल ब्रह्माण्ड नूपँ पशुं

गृह्ण २ स्वाहा ॥ इतिसम्प्रोक्ष्य ॥ ततः पुष्पाक्षतैः पूजयेत् ॥ ॐ शिरसि रुधिर वक्त्रायैनमः । मुखे-ॐ रक्तदंतिकायैनमः । ललाटे-ॐ सर्वधारिण्यैनमः । वदने-ॐ शांकिण्यैनमः । दन्तेषु-ॐ खेचर्यैनमः । नासिकायां ॐ गंधायैनमः । जिह्वायां-ॐ सरस्वत्यैनमः । ग्रीवायां-ॐ भद्रकाल्यैनमः । श्रित्ते-ॐ अशोक वासिन्यैनमः । बाह्वोः—ॐ वज्रधारिण्यैनमः । हृदये—ॐ ललितायैनमः । स्कन्दे—ॐ सिंह वासिन्यैनमः । गुह्ये—ॐ भगवत्यैनमः । पार्श्वयोः—ॐ कालयमाभ्यांनमः । जंघयोः—ॐ महाबलायैनमः । लांगूले—ॐ ब्रह्मणेनमः । पादयोः—ॐ जल वासिन्यैनमः ॥ ततोपशुपाद्याद्यर्घ्य च मलीय गन्ध पुष्पाक्षत धूप दीप नैवेद्यादिभिः सम्पूज्य ॥ संकल्पंकुर्यात् ॥ ॐ तत्तदत्रपृथिव्यां जम्बूद्वीपे मम सकुटुम्ब सपरिवारस्य आयुरारोग्यैश्वर्याभिवृद्धये परजन्त्र परमंत्र दुःस्वप्न दुश्चरित्रादि दुष्टफल दूरी करणार्थं सर्व मनेप्सित फलावाप्तये श्री अमुक देवता प्रीत्यर्थं इमं महिषबलिं, वा.छागबलिं, वा.मेषबलिं, पंचदश, दश वर्ष, वा,एक वर्षा वच्छिन्नं बलिं दैवतं तुभ्यम हंघातयिष्ये ॥ ततोऽज-

लिखित्वा ॥ ॐ पशुस्त्वं बलि रूपेण मम भाग्या दुपस्थितः । प्रणमामि ततः सर्वं रूपिणं बल रूपिणम् ॥ यज्ञार्थे पशवः सृष्टा स्वयमेव स्वयंभुवा । अतस्त्वां घातयिष्यामि तस्माद्यज्ञे वधोऽवधः ॥पशुयोनि प्रसूतोऽसि पूजा होमादि कर्मसु । तुष्टा भवतु सादेवी सरक्त पिशितैस्तव ॥ चण्डिका प्रीति दानेन दातुरापद्विनाशनः । चामुंडा बलि रूपाय बलेतुभ्यं नमो नमः ॥ पुनः पशुकर्णे ॥ ॐ पशुपाशाय विद्महे शिरच्छेदाय धीमहि तन्नः पशु प्रचोदयात् । इति जपित्वा ॥ खड्गमानीय ॥ ॐ ह्रीं इति । बीजाक्षरैर्विलिख्यध्यायेत् ॥ ॐ कृष्णं पिनाक पाणिं च काल रात्रि स्वरूपिणम् । उग्ररक्तास्य नयनं रक्त माल्या नुलेपनम् ॥ रक्ताम्बर धरं चैव रक्त हस्तं कुटुम्बिनम् । पिबमानं मरुधिरं भुंजानं क्रव्य संहितम् ॥ इति ध्यात्वा ॥ मूलेनेक्षा । ॐ रसनात्वं चण्डिकायाः सुरलोक प्रसाधकः । इत्यभिमन्त्र्य । ॐ ह्रीं ऐं खड्गायनमः । इति पाद्यादिभिः खड्गं सम्पूज्य ॥ ततः पुष्पाक्षतैः । मुष्टौ—ॐ महादेवायनमः । धारे—ॐ यमायनमः। अग्रे—ॐ कालाग्नयेनमः । ॐ असिर्विशसनः खड्गस्तीक्ष्ण धारो दुरासदः॥

श्रीभर्गो विजयश्चैव धर्मपाल नमोस्तुते । इत्यष्टौ तव नामानि स्वयमुक्ता निर्येषसा । नक्षत्रं कृत्तिका तुभ्यं गुरुर्देवो महेश्वरः । हिरण्यंच शरीरंते धाता देवो जनार्दनः ॥ पिता मिता महोद्देव स्त्वं मां पालय सर्वदा । भावशुद्धोकर्णपणश्च अलि तेजास्तथैवच । ॐ तीक्ष्णदंष्ट्रायनमः इति पुष्पं दत्वा ॥ ॐ ह्रीं फट् । इति खड्गमादाय ॐ कालि २ वज्रेश्वरि लोहदंडा यनमः । इति जप्त्वा । पशुग्रीवायाम् । ॐ खड्गत्वं शीघ्रं छिंधिर फट् स्वाहा । इति मंत्रेण पूर्वाभिमुखं बलिं स्वयं उत्तराभिमुखं, वा, बलिं सकृत्प्रहारेणाच्छिंद्यात् ॥ ततः कस्मिन् पात्रे रुधिर मानीय चतुर्भागं कृत्वा॥ ऐशान्याम्—ॐ विदारि कायैनमः । आग्नेय्याम्—ॐ पूतनायैनमः । नैऋत्याम्—पाप राक्षस्यैनमः । वायव्ये—ॐ कौशिक्यैनमः ॥ ततः महाकाल्यै रुधिरबलिंदद्यात् ॥ ॐ कालि २ महाकालि कालिके पापनाशिनि शोणितं च बलिं गृह्ण वरदे वामलोचने । ततः ऐं ह्रीं श्रीं कौशिकि रुधिरेणाप्यायताम् इतिवदेत् ॥ ततः पशु शिरसि ज्वल दीप शिखां दद्यात् ॐ यावच्छिरसि रोमाणि दीपोदहति भैरवि । तावद्वर्ष सहस्राणि गौरी लोके स गच्छति । एष सदीप पशु शीर्ष बलिः ह्रीं दुर्गादेव्यैनमः । भ्रान्ति

जलमुत्सृजेत् ॥ ततः खड्गरुधिरमादाय ॥ ॐ यँयँ स्पृशामि पादेन यँयँ
पश्यामि चक्षुषा । ससेव शतँ यातु यदि शक्रसमो भवेत् । इति ललाट
तिलकँ कुर्यात् ॥ इति महिषादि बलि प्रयोग विधिः समाप्त ॥ महिष॥
छाग । मेष । आदि बलिप्रयोग स्त्वयमेव किंतु नामोच्चारँ पृथक् पृथक्॥



# अथ कुमारी पूजाविधिः ॥

श्रीदेवी पूजनान्ते कुमारी पूजनँ कुर्यात् । यजमानः पूजयेकन्य कन्यानाँ
नवकँ शुभँ । द्विवर्षाद्या दशाब्दान्ताः कुमारीः परिपूजयेत् ॥ १ ॥
तासाँचक्रमेण— कुमारी । त्रिमूर्ति । कल्याणी । रोहिणी । काली ।
चण्डिका । शाम्भवी । दुर्गा । सुभद्रा । इति नामानि पूजाकार्ये ॥
आवाहनम् । मंत्राक्षरमयीं लक्ष्मीं मातृणाँ रूपधारिणीं । नवदुर्गात्मि
काँ साक्षात्कन्या मावाहयाम्यहम् ॥ कुमारीणाँ पृथक् २ नामोच्चार्य